

यदि भवताम् परिचये कुटुम्बे परिसरे कोऽपि बाल्ये एव प्राप्तयशा: बाल: अस्ति चेत् कृपया तस्य/तस्या: विवरणं स्वसन्दर्भं दत्त्वा अस्मान् प्रति प्रेष्यताम्।

Young Achievers-RCM,
Chandamama India Ltd,
No:2 Ground Floor, Swathi Enclave, Amman koil street, Vadapalani, Chennai-26
(or)
online@chandamama.com

# क्रीडाङ्गणस्य राजा

'अथर्व शिन्दे' इति महाराष्ट्रीय: १५ वर्षीय: बाल:। बाल्यादारभ्य एव स: बॅडमिण्टन क्रीडाम् अभ्यस्तवान्। साम्प्रतं ठाणे इत्यत्र विद्यमानायां 'सईद मोदी' क्रीडा-अकादम्यां प्रशिक्षणं स्वीकरोति। जिलास्तरे तथा राज्यस्तरे जायमानानां स्पार्धानां कृते प्रशिक्षणं स्वीकरोति। २०१० तमे वर्षे राज्यस्पर्धायां U-१६ गणे स: उपान्त्यस्पर्धक: आसीत्।

शालास्तरे नगरस्तरे च बह्व्य: स्पर्धा: तेन जिता:। बहव: क्रीडापटव: यद्यपि तस्य प्रिया: तथापि ऑलिम्पिक-क्रीडायां सुवर्णपदकविजेता 'माईकेल फेल्प्स' इति तस्य आदर्श:। प्रतिस्पर्धिनं क्रीडाक्षेत्रे स:आक्रमकरीत्या यथा नमयति तेन अथर्व: प्रभावित:।

अथर्व: प्रतिदिनं प्रयत्नपूर्वकं अभ्यस्यति तेन सह प्रियगीतश्रवणमपि विना विस्मरणं करोति। गीतश्रवणेन मनसि जायमान: भार: न्यूनीभवति इति स: मन्यते। स्पर्धायां तस्य लाभ: भवति।

'मिकी माउस' इति व्यङ्ग्यव्यक्तिरेखा तस्य अतीव प्रिया। यदा स: क्रीडाभ्यासं, पठनं वा न करोति तदा मित्रै: सह क्रीडाविनोदेन कालयापनं तस्मै रोचते।

स: एकलक्रीडायां पटु: तथापि अन्यै: क्रीडापटुभि: सह असकृत् द्वन्द्वक्रीडा: अपि क्रीडितवान् स:। द्वन्द्वक्रीडायामपि नैपुण्यम् साधितवान् स:।

'बॅडमिण्टन' क्रीडां विहाय धावनम्, फूटबॉल टेनिस च इति क्रीडाभ्य: अपि स्पृहयति अथर्व:। भारतस्य प्रतिनिधित्वेन विविध क्रीडासु भागं गृहीत्वा पदकानि विजेतव्यानि इति तस्य आकाङ्क्षा।



दिसम्बर २०११ ₹20/-
*Founded by* B. Nagi Reddi and Chakrapani

**Editor & Publisher :**
Prashant Sharad Mulekar
**Associate Editors :**
R. Vaasugi, K. Raja Sekhara Raju
**Sub Editor :**
Patricia Pandian
**General Manager :**
Sowmya Bharadwaj
**Senior Artists:**
K.C. Sivasankaran (Sankar), Gandhi Ayya, P. Mahesh, Sandeep Solkar
**Artist :**
Venki
**Layout Designers :**
B. Thirumal, K. Narendra, N. Sivakumar
**Production In-charge :**
Prashant Pawar
**Circulation:**
circulation@chandamama.com
**Asst. Manager - Sales & Circulation:**
Subhankar Rej
**Sales Officer - Circulation :**
K. Ravishankar
**Advertisement :**
sales@chandamama.com
**Subscription :**
subscription@chandamama.com
Ramya K (Chennai)
Ph: +91 44 4399 2828
**Head Office :**
**CHANDAMAMA INDIA LTD.,**
P.O.Box No:19407, Mumbai-400093
Phone +91 22 28312872 / 28311849
Email:chandamama@chandamama.com
Website : www.chandamama.com

Published, Printed and Owned by CHANDAMAMA INDIA LTD., Published and Printed on their behalf by Prashant Sharad Muleker Published at B-3, Cross Road 'B', MIDC, Andheri (East) Mumbai - 400093. Printed At :- Kala Jyothi Process Pvt. Ltd, S.No.185, Kondapur, R.R.District-500133, Andhra Pradesh. Editor :- Prashant Sharad Mulekar

S

# अन्तरङ्गम्

## चन्दमामा

Volume-2 December 2011 Issue-12


* वाचकानां पुटोऽयम् ...०६
* मत्स्मृतय: - १ ...०९
* मत्स्मृतय: - २ ...१०
* अमृतवर्षिण्या: निश्चय: ...११
* विभाजनम् ...१९
* अन्यथा चिन्तनम् ...२१
* मित्रभेद: - २५ ...२५
* प्रशस्तमृद् ...२८
* मित्रद्रोही ...३१
* स्पर्धा ...३३
* अहङ्कार: ...३५
* प्रपञ्चे चातुर्यम् ...३९
* पराजित: ...४२
* यदा भवति भाग्योदय: ...४४
* कृषिक: एव राजा ...४८
* प्रत्यक्षप्रमाणाम् ...५२
* मुखपृष्ठकथा ...५३
* सार्थ: कोष: ...५४
* शिथिलालय: - २१ ...५५
* सामर्थ्यम् ...६३
* सत्परिवर्तनम् ...६६
* सहाय्यार्थं हस्त: ...७०
* कोऽहं भविष्यामि? ...७१
* चन्दमामीया सामान्यज्ञानपरीक्षा - ३५ ...७२
* हस्यताम् उदरोपपीडम् ...७३
* राजखाद्यम् ...७४
* वर्ध्यताम् शब्दसम्पत्ति: ...७६
* भारतदर्शनम् ...७८
* बीरबल: ...८०
* चित्रमञ्जूषा ...८२

**न**मो नमः, मित्राणि!

'अहो गरुत्मतः इव कालचक्रस्य गतिः! महता वेगेन अपगच्छति समयः। हन्त! संवत्सरान्तः सम्प्राप्तः।' इत्यादीनि विस्मयबोधकानि वाक्यानि तु वयं प्रत्येकं डिसेम्बर्-मासे उच्चारयामः। यदा कश्चन संवत्सरः अन्तम् आयाति तदा पूर्वतनसंवत्सरस्यापेक्षया वर्षमिदं जवेन समाप्तिम् अयात् इत्येव भावना भवति अस्माकं सर्वेषाम्। वर्षारम्भे वयं नूतनसङ्कल्पान् कुर्मः नवयोजनाश्च रचयामः। तासां प्रत्यक्षताम् आनयने रतासु एव अस्मासु डिसेम्बर्-मासः उदेति।

यदि वयं शान्तचेतसा उपविश्य स्मृतिपटलान् परिवर्त्य 'वर्षेऽस्मिन् वैयक्तिकराष्ट्रीयवैश्विकस्तरेषु किं घटितम्?' इति समीक्षणं कुर्मश्चेत् बहवः रोचकाः तथ्यांशाः गोचरीभवन्ति। अस्माभिः सम्पद्विपच्चेति उभयमपि अनुभूतम्। २०११ तमे वर्षे अस्मत्पाठकाः कान् अनुभवान् समचिन्वन्, किं तेभ्यः अरोचत वा नारोचत वा, अस्मिन् वर्षे तैः किं यशः आसादितम् इति ईमिल्-माध्यमेन ज्ञातुं वयं समुत्सुकाः।

राजनीतिवाणिज्यादिषु अस्माकं राष्ट्रेण अस्मिन् हायने तादृश्यः विवादास्पदघटनाः दृष्टाः याभ्यः 'पुरोगामिनः वयम् आहोस्वित् प्रतिगामिनः?' इति भ्रमः सञ्जायेत मनसि।

चन्दमामा तु तया प्रतिश्रुतानि प्रायशः सर्वाण्यपि वचनानि, सङ्कल्पान्, योजनाश्च पूर्णताम् अनयत्। अस्मद्वाचकाः समयेन पत्रिकां प्राप्नुयुः इत्यर्थम् अस्माभिः सफलतया वितरणव्यवस्थायाः नियोजनं कृतम्। ग्रामीणभारतेऽपि अस्माभिः चन्दमामाप्रसारः वर्धितः। युगपदेव उत्तमं प्रतिस्पन्दं लभमानैः अस्माभिः आय्-फोन्, आय्-पॅड् चेताभ्यां माध्यमाभ्यां चन्दमामा प्रकाशिता। चलभाष-आन्तरजालमाध्यमैश्चापि अस्माभिः मोबिसोड्स्-श्राव्यकथा इत्यनयोः प्रकाशनम् आरब्धम्। मासेऽस्मिन् वयं त्रिमितीयपुस्तकं प्रकाशयामः। अस्माकं वाचकानाम् आश्रयदातॄणां च साहाय्येन आशीर्वचोभिः च २०१२ तमे वर्षे वयम् अस्माकं कार्यपरिधिं विस्तारयितुं शक्नुमः इति आशासे।

डिसेम्बर्-मासस्य २५ तमे दिनाङ्के वयं भगवतः येशुख्रिस्तस्य जन्मदिनम् आचरामः इति तु विदितमेव सर्वेषाम्।

नववर्षारम्भे गतवर्षस्य अपेक्षया साधुतराणि कार्याणि सङ्कल्पयामः तानि च पूर्णतां नेतुं प्रयतामहे। तेनैव शनैः दृढपदैः च विकासं प्राप्य विवेकशालिनः नागरिकाः भविष्यामः। - ***सम्पादकः***



# वाचकानां पुटोऽयम्

**च**न्दमामायाः ऑक्टोबर्-सञ्चिकायां प्रकाशिता विक्रमवेतालयोः कथा चन्दमामामासिकस्य पूर्वतनशैल्याः सादृश्यं भजते इत्येतत् तु साधु एव। कथान्ते प्रकटीभूतः लेखकस्य तर्कः खलु प्रशंसाभाजनम्। कथार्थं शङ्करेण आलिखितानि चित्राणि तस्याः रोचकतां वर्धयन्ति। विशेषतः तद्धस्तजानि राज्ञ्याः राज्ञः च चित्राणि न कदापि अस्माकं स्मरणात् च्युतानि भवेयुः। बहुभ्यः वर्षेभ्यः चित्रलेखनकर्मणि रतस्य तस्य चित्राणि आलेखनकौशलं च कालप्रभावेणापि न क्षीयते।

***- जोगिनायुडु, विजग, आन्ध्रप्रदेशः***

**ऑ**क्टोबर्-मासे प्रकाशितं सम्पादकीयं लेखं दृष्ट्वा अहं नितरां प्रभावितः यदा अहं 'कश्चन ज्येष्ठः युवा सामान्येतरदृष्ट्या जगत् पश्यन् इतिहासम् अरचयत्' इति वाक्यम् अपठम्। अण्णाहजारेवर्यस्य नाम अनुल्लिख्यापि तस्य कार्यस्य साधुचित्रणं कृतं भवता तया सरलया अभिव्यक्त्या।

***- अरुणा, गिड्डलोर्, आन्ध्रप्रदेशः***

**च**न्दमामा मह्यं नितरां रोचते। भवता प्रकाश्यमानाः कथाः अस्मासु नैतिकमूल्यवृद्धिं कुर्वन्ति। अकबर-बिरबलयोः कथाः चन्दमामायां पुनः प्रकाश्यन्तामिति प्रार्थये।

***- सागरः, श्रीसरस्वतीविद्यामन्दिरम्, गुलबर्गा, ५८५३१८***

**ऑ**क्टोबर्-सञ्चिकायां प्रकाशिताः 'वास्तविकः अग्निविस्फोटः','एषः एव श्रेष्ठः!', 'सुखिनो भवन्तु' इत्येताः कथाः चन्दमामाशैल्यनुगुणं न वर्तन्ते। ईदृश्यः कथाः चन्दमामायाः मिथ्यानुकरणं कुर्वतीषु अन्यासु मासिकपत्रिकासु प्रकाशिताः भवन्ति।

***- डी. अन्वेषी, मुक्कमाल, आन्ध्रप्रदेशः***

**दु**र्लभस्य मुखपृष्ठचित्रस्य प्रकाशनेन धन्यवादार्हाः भवन्तः। ईदृशानि चित्राणि भाविनि काले अपि आधिक्येन प्रकाशयन्तु इति प्रार्थना।

***- माधवरावः, निजामाबाद्, आन्ध्रप्रदेशः***

**च**न्दमामामासिकेन अन्ताराष्ट्रीयस्तरे अपि कीर्तिः अर्जिता। यदाऽहम् ऑक्टोबर्-मासस्य पत्रिकायां 'मत्स्मृतयः' इति पत्रभागम् अपठम् तदा ऑस्ट्रेलियादेशस्थेन पाठकेन प्रेषिताः स्मृतयः इति ज्ञात्वा महदाश्चर्यम् अन्वभवम्। चन्दमामायाः प्रत्येकं कथायां किञ्चित् नावीन्यं वर्तत एव। कथाः, प्रहेलिकाः, भारतदर्शनम् इत्यादिभिः रञ्जयन्तीं पत्रिकां वयं न कदापि विस्मरामः। चन्दमामायां गृहम् आगतायां मम भ्रात्रेयः भ्रात्रेया च तद्गतकथाः श्रृण्वन्तौ एव सर्वाह्णिकानि निवर्तयतः। तौ एव चन्दमामायां प्रकाशितायाः प्रत्येकं कथायाः उत्तमौ परीक्षकौ इति मन्ये। चन्दमामागणाय साधुवादाः।

***- पी. रवीन्द्ररावः, हैद्राबाद्, आन्ध्रप्रदेशः***

**पु**रातनानां दुर्लभानां च मुखपृष्ठचित्राणां प्रकाशनेन भवन्तः चन्दमामायाः वैभवशालिनः इतिहासस्य पुनर्जागरणम् अकुर्वन्। सामान्यज्ञानपरीक्षायां प्रश्नाः दिष्ट्या अतीव सरलाः आसन्। तिस्रः लघुकथाः अपि मनोहारिण्यः आसन्। प्रतिमासं चन्दमामायां द्वित्राः लघुकथाः भवन्तु एव।

*- जी. स्वप्ना, बीमावरम्, आन्ध्रप्रदेशः*

**आ** बाल्यात् अहं चन्दमामां पठामि। नैतिककथाः मह्यं बहु रोचन्ते। 'भारतदर्शनम्' इत्येतस्यां धारायां पठितं मया यत्, 'उत्तरकाश्यां दुर्योधनः पूज्यते।' केरले अपि कोलमजनपदस्थे मलनाड इत्यत्र स्थिते देवालये दुर्योधनः देवतारूपेण अर्च्यते भक्ताश्च तस्मै बलिरूपेण मत्स्यान् सुरां च अर्पयन्ति। चन्दमामागणाय शुभाशयाः।

*- जी. सुरेशबाबू, मल्लापुरम्, केरलम्*

**अ**तीव रम्या चन्दमामापत्रिका। 'कावेरी नदी',' बालिका पाठं पाठयति' इत्यादयः कथाः सर्वेभ्यः अरोचन्त। कन्नडभाषायाः अष्टमज्ञानपीठपुरस्कारविजेतारं चन्दशेखरकाम्बरमहाभागं दिष्ट्या वर्धयाम्यहम्।

*- एम्. पी. स्वामी, चामराजपेट्ट, बङ्गलुरु*

गणेशचित्रयुतं मुखपृष्ठं चित्ताकर्षकम् आसीत्। पञ्चतन्त्रकथाः, वीरबलः, 'शाश्वतः पाठः' इत्यादयः कथाः पठनात् नितरां मोदयन्ति मानसम्। गतचत्वारिंशद्वर्षेभ्यः अहं चन्दमामां पठामि। धन्यवादार्हाः भवन्तः।

*- आर्. विजयकला, आदर्शनगरम्, बङ्गलुरु*

**बा**ल्यकाले एव अहं चन्दमामापठनम् आरभे। अद्यापि अहं तत्पठनम् अनुवर्तयामि आजीवनं च पठिष्यामि। चन्दमामापठनेन अहं अस्माकं देशस्य वैभववत्यः संस्कृतेः सामीप्यम् अनुभवामि। युष्माकं रामायणमहाभारतयोः कथाकथनपद्धतिः नितरां सुन्दरी, लोककथाश्च अविस्मरणीयाः। अद्यतनबालकाः अपि एताः कथाः पठेयुः तद्गतनीतिमूल्यानि च आत्मसात् कुर्युः इत्यतः एतत् कथाकथनम् अक्षुण्णं प्रवर्त्यतामिति विज्ञापयामि।

*- रोहितः*

**ए**म्.टी.व्ही. आचार्यस्य मुखपृष्ठे विद्यमानं दीपावलिचित्रं नितान्तं रमणीयं स्तुतिभाजनं च। ७९ तमे पृष्ठे वर्तमानं देव्याः लक्ष्म्याः चित्रं काचकाष्ठादिभिः सम्यक् निबध्य तां प्रतिमां देवगृहे पूजनार्थं स्थापयामि। दीपावलिपर्व आभारतम् आचर्यते इति 'भारतदर्शनम्' इत्यस्य माध्यमेन स्पष्टीभवति। अकबरवीरबलयोः कथाऽपि सुष्ठु वर्तते। सर्वासु कथासु कश्चन नीतिपाठः वर्तते एव। यथा'मल्लम्मायाः दृढनिश्चयः' इत्येषा कथा मातृभूमिभक्तिं सूचयति। पुनरपि चन्दमामा पूर्ववत् वर्धमानः अस्ति इति ज्ञात्वा अतीव सन्तोषः अभवत्। चन्दमामागणाय दीपावल्याः शुभाशयाः। कृपया चित्रशीर्षिका-स्पर्धां पुनः चालयतु इति प्रार्थना।

*- विजयालक्ष्मीः वेङ्कटेशन्, चेन्नै, तमिळनाडु*

# मत्स्मृतय: - १

एकदा मम पितामह: सुन्दरमुखचित्रेण, विविधवर्णयुतं सचित्रकथापुस्तकं मह्यं दत्तवान्। तदा अहं षड्वर्षीय: आसम्। तदा तेनोक्तम् "एतत् उत्तमं कथापुस्तकम्" इति। न जानामि स्म तदा यत् तत् चन्दमामाया: प्रथमं प्रकाशनमिति।

मम पितृष्वसा तदानीमेव अक्षराणि, पठनं च अधिगतवती। सा लघु लघु वाक्यानि पठितुं शक्नोति स्म। सा मन्निमित्तं तत् पुस्तकं पठति स्म। अहं पुन: पुन: पठितुं तां पृच्छामि स्म। तत: परं वयं प्रतिमासं चन्दमामां प्राप्तवन्त:। अधुना अपि अहं स्मरामि तत्रत्या: कथा:। विशिष्य, अवसरल रामकृष्ण रेड्डी महोदयेन विरचितां 'क्षुद्रचटक:' इति कथाम्। तथैव भानुमती रामकृष्णस्य 'भूतस्य आक्रोश:' इति कथां स्मरामि। तत्पश्चात् मम पुत्राभ्यां यदा कथा: पठितुं पृष्टं तदा मम बाल्यस्य पुन: अवलोकनं जातम्।



Name: J. Narayana Murthy
Occupation: C.G.M
IDBI Bank.Rtd, Hyderabad.

मम कार्यवशात् १९८२-८८ इति काले अहं चेन्नै नगरे अवसम्। तदा मम श्रीदासरी सुब्रह्मण्यम् महोदयेन सह परिचय: जात:। य: नेपथ्ये स्थित्वा चन्दमामां प्रकाशपथं नयति। एकदा अहं तेन महोदयेन सह चन्दमामा कार्यालये मिलितवान्। तदा महोदयेन चन्दमामाया: नवीनं प्रकाशनं प्रदत्तम्। तद् अधुना अपि अहं प्राप्तसम्पदम् इव रक्षामि।

मयि चन्दमामाया: अन्य: कश्चन प्रभाव: यत् सा न केवलं पाठकरूपेण प्रवर्धने सहकृतवती अपि तु लेखने अपि सा मम प्रेरिका सञ्जाता। मम उपाशीति: कथा: जोन्नलगड्डा रत्ना , कमलिनी इति नामभ्यां प्रकाशिता: वर्तन्ते। ततोऽप्यधिकम् आनन्दं कस्मात् प्राप्स्ये? डॉ. जे राजगोपालरावमहोदय: गतचत्वारिंशत् वर्षत: चन्दमामाकृते कथा: लिखति। सम्प्रति स: स्वपत्न्या जे. रामलक्ष्म्या सह 'वसुन्धरा' इति नाम्ना कथा: लिखति। स: मम सोदर: वर्तते। अन्यौ द्वौ सोदरौ डॉ.मार्कण्डेयुलु रामबाबु: च चन्दमामाकृते कथा: लिखत:। अत: एव दासरी सुब्रह्मण्यम् महोदय: अस्माकं परिवारं 'चन्दमामापरिवार:' इति सम्बोधयति। चन्दमामया सह अस्माकं सम्बन्धं ततोऽपि कथं वा विवृणोमि?

चन्दमामाया: जानपदकथा:, अतिसूक्ष्महास्यकथा:, वक्रोक्तिपूर्णा: कथा: अन्या: च कथा:

नैकानि मूल्यानि अस्मान् शिक्षयन्ति। चन्दमामा बालकानां मनस्सु अतिस्मरणीयां मुद्रां करोति। ज्येष्ठा: अपि चन्दमामात: शिक्षां प्राप्तुं शक्नुवन्ति। अत: एव एषा सर्ववयस्कानां पत्रिका इति उच्यते।

इदमिदानीं दासरी सुब्रह्मण्यम्महोदयस्य संस्मरणसभायां वक्तार: ''चन्दमामा अस्माकं राष्ट्रस्य निधि:। अस्या: संरक्षणम् अस्माकं सर्वेषां कर्तव्यम्'' इति अवोचन्।

## मत्स्मृतय: - २

मम तिसृभि: अग्रजाभि: सह चन्दमामाया: कथा: पठन् मदीये प्रिये परिवारे प्रवृद्ध: अहम्।

चन्दमामा मम जननात् प्रागेव अस्मद्गृहं प्राविशत्। मम पितरौ स्वसार: चन्दमामाप्रतिकृती: वर्षश: विभज्य संरक्षन्ति स्म। ता: प्रतिकृतय: इदानीमपि अस्माकं भाण्डागारे सुरक्षिता: वर्तन्ते। मम अग्रजा सीमाभगिनी चन्दमामां बहु प्रीणाति स्म। यदा वयं पाठशालायां पठाम: स्म, तदा विरामदिनानि भवन्ति चेत् सा पुरातनप्रकाशनानि स्वीकृत्य पुन: पठति स्म।


Name: Sandeep H. Dave
Occupation: Junior Forensic Clerk, Junagadh.

चन्दमामाया: चित्राणि, कथा: अस्मान् बहु आकर्षन्ति स्म। अस्माकं बाल्ये यद्यपि बह्व्य: बालपत्रिका: पठिता: तथापि चन्दामामा नैतिकमूल्ययुताभि: सामाजिकपौराणिकाभि: कथाभि: अस्मभ्यम् अविस्मरणीयानुभूतिं प्रादात्।

इदमिदानीम् विरामकाले मम भागिनेया: कृत्तिका, अभि:, दर्शित: च जुनागढम् आगता:। तदा ते चन्दमामाप्राचीनप्रकाशनानि पठितुम् स्वीकृतवन्त:। तदा वयं सर्वे अपि चन्दमामया सह अस्माकं बाल्यदिनानि स्मृत्वा अभिनवानुभूतिं अन्वभवाम।

**Request to readers:** Contributors of stories, memories are requested to send in their entries with their complete name, address, phone no and other contact details to enable us to get back to you.
Write to us:
**Chandamama India Ltd.**, No:2 Ground Floor,
Swathi Enclave, Amman koil street, Vadapalani, Chennai-600026.
● Phone: 044-43992828 ● Email : online@chandamama.com

# विक्रमः वेतालः च

## अमृतवर्षिण्याः निश्चयः

दृढनिश्चयः राजा विक्रमः वृक्षं प्रत्यागच्छत्। सः वृक्षात् प्रेतम् अधः आनीतवान् स्कन्धे धृतवान् च। यथापूर्वं सः मूकतया श्मशानं प्रति गमनमारभत। ततः प्रेते वसन् पिशाचोऽब्रवीत् "भोः राजन्, कश्चन भयङ्करात् सङ्कटात् यदा अस्मान् मोचयति तदा तं प्रति कृतज्ञताभावः भवेत्। अवन्तिपुरसाम्राज्यस्य राजकन्या अमृतवर्षिणी एतस्मात् विपरीतमाचरितवती। कृतज्ञताभावस्यापेक्षया सा स्वकीयहेतवे एव प्राधान्यमयच्छत्। अहं तां कथां तुभ्यं कथयामि या तव श्रमापहाराय साहाय्यिका भवेत्" एवं सः कथारम्भमकरोत्।

"अवन्तिसाम्राज्ये प्रदीपः नाम एकः शूरः धैर्यशीलः च युवकः वसति स्म। सः जिङ्कलमित्तं नाम ग्रामे वसति स्म। सः अश्वारोहणे युद्धकलायां च कुशलोऽसीत्। तस्य



प्रपितामहः अवन्तिपुरे सेनापतेः पदं वहति स्म। प्रदीपोऽपि तस्य मार्गमनुसर्तुमिच्छति स्म।

एकदा कदाचिदेवमभवत् यत् अवन्तिसाम्राज्यस्य राजकन्या अमृतवर्षिणी एकस्मिन् दिने तस्याः शयनगृहात् यत्र सा शयाना आसीत् ततः पर्यङ्केण सह अकस्मात् अदृश्या अभवत्। राजा राजज्योतिषमाहूतवान्। सः राजज्योतिषाय स्वकन्याम् अन्वेष्टुं प्रार्थितवान्। तस्य ज्योतिषस्य समीपे एकं विशिष्टमञ्जनमासीत्। तत् सः यदा नेत्रयोः उपयुङ्क्ते तदा नष्टं मनुष्यं वस्तु वा द्रष्टुं शक्नोति स्म। तस्य साहाय्येन सः राजज्योतिषः ज्ञातवान् यत् राजकन्या केनचित् दुष्टेन मायाविना अपहृता अस्ति। सः तां दक्षिणसमुद्रस्थिते मकरद्वीपः नाम द्वीपकल्पे स्थानबद्धां कृतवानस्ति।

यः कोऽपि तां ततः मोचयेत् तस्मै पारितोषिकदानस्य उद्घोषणां कृतवान् अवन्तिपुराधीशः। राज्ञः कृपादृष्टिः भवतु अतः प्रदीपः तत् आह्वानं स्वीकर्तुमग्रे आगतवान्। सः आवश्यकानि आयुधानि गृहीतवान्। कञ्चन अश्वोत्तममारूढवान्, दक्षिणसमुद्रं प्रति प्रयाणं कृतवान् च। बहूनि सङ्कटानि अतिक्राम्य, परम्परागतपद्धत्या स्वनिर्मितया नौकया सः मकरद्वीपः नाम द्वीपकल्पं प्राप्तवान्।

स्थानम् अन्विष्यन् सः एकं रमणीयमुद्यानं प्राप्तवान्। सः मनसि चिन्तितवान् मनुजसम्पर्करहितम् एतदुद्यानं निश्चयेन कस्यचित् द्योतकमस्ति। एवं भवितुमर्हति यत् सः दुष्टः मायावी राजकन्यामत्रैव गोपितवान् अस्ति। सः उद्यानं प्राविशत्।

विविधवर्णानां पुष्पैः सुशोभिताः वनस्पतयः गुल्मानि च मधुरैः रसवद्भिः फलैः पूर्णाः वृक्षाः, सुस्वरं कूजन्तः कोकिलाः, गूहान्वेषणक्रीडां क्रीडन्तः ग्राम्याः पशवः, एतैः उद्यानं पूर्णमासीत्। निसर्गप्रेमिकाणां कृते स्वर्गीयस्थानमिव तदुद्यानमभासत। यदा सः उद्याने सञ्चरन्नासीत्, तदा तेन एकं सुन्दरं भवनं एका सुन्दरी चारुगात्री तरुणी च भवनस्य अट्टे दृष्टा।

प्रदीपं दृष्ट्वा सा अनुक्षणम् अधः आगतवती किमपि वक्तुं च प्रायतत। परं शब्दोच्चारणात् पूर्वमेव सा निःशब्दा जाता।

''त्वम् अमृतवर्षिणी। सत्यं नु?'' प्रदीपोऽपृच्छत्। सा उत्तरं न दत्तवती।

''इतः परं मा बिभेहि। इतः त्वां मोचयितुमहं समर्थोऽस्मि। कृपया मया सह आगच्छ प्रदीपोऽवदत्।'' किन्तु सा तु अचला स्थिता।

''क्षम्यताम्। प्रायः त्वम् अमृतवर्षिणी नासि। सा कुत्रचित् अन्यत्र स्यात्। इदानीं मया तस्यान्वेषणार्थमन्यत्र गन्तव्यं भवेत्'' एवमुक्त्वा प्रदीपः ततः गन्तुं परावर्तत। तदा सा आर्ततया वाक्यमुवाच, ''कृमया तिष्ठतु। अहमेवामृतवर्षिणी''। तया वाक्यमुच्चरिते एव प्रदीपः मयूरे परिवर्तितः। प्रदीपः चकितः जातः। आत्मनि एतद् परिवर्तनं दृष्ट्वा तस्य मनः क्षुब्धं जातम्।

अमृतवर्षिणी तस्य पुरतः आगत्यावोचत्, ''कृपया क्षम्यताम्। सः दुष्टः मनुष्यः मम इतः मुक्तिः मा भवतु अतः मम शब्दान् मन्त्रितवान् अस्ति। अहं तूष्णीमुपविष्टा यतो हि एवं किमपि भवेदित्यहं जानामि स्म। परं मम दुर्भाग्यं माम् इतोऽपि न त्यजति। कः माम् किमर्थमपहृतवान् अस्ति तदहं तुभ्यं कथयामि'' एवं सा स्वकथां वक्तुमारभत।

प्रहर्षणः राजोद्यानस्य उद्यानपालस्य पुत्रः आसीत्। सः राजकन्यायाः सौन्दर्यस्य ख्यातिं श्रुतवान् आसीत् तां च द्रष्टुम् उत्कण्ठते स्म। सः पित्रा सह उद्यानमागच्छति स्म तथा च उद्याने मनसा कार्यं कुर्वन्नस्तीति नाटयति स्म। एकस्मिन् दिने सः उद्यानात् निर्गच्छन्नस्मीति नाटकं कृतवान् परं पितुः अवधानं नास्तीति ज्ञात्वा सः आत्मानं





गुल्मस्य पृष्ठतः गोपितवान्।

सः उद्याने सखीभिः सह विहरन्तीं राजकन्यां दृष्टवान्। सः तस्याः सौन्दर्येण स्तम्भितः जातः। एकस्मिन् दिने राजकन्या एकां क्रीडां क्रीडन्ती आसीत् यत्र सा नयनयोः वस्त्रं बद्ध्वा सखीः अन्वेष्टुं प्रयतते स्म। सा एषा काचित् सखी अस्तीति मत्वा प्रहर्षणं स्पृष्टवती। यदा सा नयनयोः वस्त्रम् अपनीतवती तदा तं तत्र दृष्ट्वा सा चकिताभवत्।

'हे राजकन्ये, तव सौन्दर्येणाहं मोहितोऽस्मि। अहं त्वां प्रीणामि। त्वमपि मां प्रीणय मम जीवनं सार्थं कुरु। आजीवनमहं त्वया सह भवामि'' एवमुक्त्वा सः तां हस्तेन गृहीतवान्।

राजकन्या स्वहस्तं तस्य हस्तात् बलात् मोचितवती, क्रोधेन तं कपोले ताडितवती, सखीभिः सह उद्यानात् निर्गतवती च।

यदा भूपः एतं प्रसङ्गं ज्ञातवान् तदा सः आदिष्टवान् 'एतं प्रहर्षणं गृहीत्वा, तस्य वधं कृत्वा, पशुपक्षिणां भोजनार्थं वने त्यजत'। राजसेवकाः प्रहर्षणम् अन्वैष्यन्, तमगृह्णन्, वनमनयन्, तस्य शिरच्छेदं चाकुर्वन्।

एतस्मात् प्रसङ्गात् राजा मम कन्या विवाहयोग्या जाता अस्तीति अवगतवान्। राजा बहूनां यूनां राजपुत्राणां रूपं क्षमताः चापृच्छत्। अन्ततो गत्वा कोसलाधिपतेः पुत्रः आनन्दवर्धनः एव पुत्र्यै अतीव सुयोग्यः वरः इत्यचिन्तयत्।

तदैव कदाचित् हिमालयं प्रति गच्छन् कुशधर्मः नाम मायावी तस्मात् वनात् अतिक्रामन्नासीत्, यत्र प्रहर्षणस्य वधः जातः। तत्र सः प्रहर्षणस्य शरीरं तस्मात् भिन्नं मस्तकं च लब्धवान्। तस्य मायाविशक्त्या सः यद् यद् अभवत् तद् तद् सर्वं सविस्तरं ज्ञातवान्। सः प्रहर्षणाय पुनः जीवनमयच्छत्। यतः सोऽचिन्तयत् यत् सः राजकन्यां प्रीणाति इत्यर्थं शिरच्छेदः नाम क्रौर्यस्य अतिरेकः एव। सः मायावी अवगतवान् यत् अवन्तिनृपात् प्रहर्षणस्य इतोऽपि मृत्युभयमस्ति। अतः सः तं काश्चन् मायाविमन्त्रान् अपाठयत्।

''हे प्रिय युवन्, यदि त्वमेतान् मायाविमन्त्रान् सत्कार्यार्थं योजयसि तर्हि त्वं श्रेष्ठः जनः भवसि।

परं यदि त्वमयोग्यचिन्तनमारभसे तर्हि त्वं सौभाग्यात् वञ्चितो भवसि हीनं जीवनं यापयसि च। त्वं यां युवतीं प्रीणासि तस्याः हृदयं जेतुं गुणः एव उत्तमः मार्गः'' कुशधर्मः प्रहर्षणमगदत्, ततः निरगच्छत् च।

मायाविसामर्थ्यं प्राप्य प्रहर्षणः दुरभिमानी अभवत्। परं तथापि तेन मायाविनः उपदेशं प्रति अवधानं दातव्यमासीत्। येन केन वा प्रकारेण राजकन्यया सह विवाहः करणीयः एव इति तेन निश्चितम्।

निर्जने मकरद्वीपे तेन एकं रमणीयमुद्यानं निर्मितम्। यदा प्रत्येकं गाढनिद्रायामासीत् तदा सः अमृतवर्षिण्याः अपहरणं कृतवान् तां च तत्र नीतवान्। तत्र सः सर्वविधाः सुविधाः तस्यै अकल्पयत्।

प्रहर्षणः नानाविधैः प्रकारैः तां प्रार्थितवान्। तथापि राजकन्या तेन सह विवाहार्थं सज्जा नाभवत्। तस्य सहना समाप्ता। सः बलस्य उपयोगं कर्तुं निश्चितवान्। सः कुशधर्मस्य उपदेशं दुर्लक्षितवान्। 'अहं मासाभ्यन्तरे प्रत्यागच्छामि परं तथापि यदि त्वं विवाहार्थं नानुमन्यसे तर्हि अहं त्वया सह बलात् विवाहं करोमि' इति सः अमृतवर्षिणीं प्रत्यादिशत्। सा यावत्पर्यन्तं विवाहार्थं नानुमन्यते तावत् तस्यै एकान्तवासस्य दण्डं कृत्वा सः ततः निर्गतः। यदि सा उद्यानात् बहिः गन्तुं प्रयतते तर्हि सा भस्मीभूता भविष्यति।



यदि केनचित् सह सा वक्तुं प्रयतते तर्हि सः पक्षिणि परिवर्तितः भवेत्।

प्रदीपः एतां कथां राजकन्यायाः मुखादशृणोत्। यद्यपि सः पक्षिणि रूपान्तरितः जातः तस्य युद्धकौशल्यमपगतं जातं तथापि सः धैर्यं न त्यक्तवान्।

अमृतवर्षिणी तं मयूरं स्वसमीप एवास्थापयत्। सा सर्वदा पित्रोः विषये राजमन्दिरस्थ-सखीनां विषये मयूरेण सह वार्तालापं करोति स्म। सा मयूरं विनोदपूर्णाः कथाः प्रसङ्गान् च उक्त्वा प्रसन्नमनसा स्वयं हसति स्म। सः मयूरः राजकन्यायाः रञ्जनार्थं नृत्यति स्म। यथाकालं तयोः दृढमैत्री जाता।

यथा प्रहर्षणस्य आगमनकालः समीपमागतः

तथा सा खिन्ना त्रस्ता च जाता। मयूरः तदवलोक्य तां उक्तवान्, "मा बिभिहि। अहं तस्य वधं करोमि इत्युक्त्वा सः ताम् आश्वासयति स्म।

प्रहर्षणः एकमासानन्तरं प्रत्यागच्छत्। सः सर्वान् पशून् खगान् च उद्याने आत्मनः पुरतः समाहितवान्। सः तान् पुरोहितेषु परिवर्तितवान् ये विवाहस्य मन्त्रान् पठेयुः, महिलासु परिवर्तितवान् याः राजकन्यां वधूवेषे अलङ्कुर्युः, जनसम्मर्दे परिवर्तितवान् ये विवाहे उपस्थिताः भवेयुः एवं प्रकारेण सामान्यतया विवाहस्य वातावरणं च सः निर्मितवान्।

अनन्तरं सः प्रदीपम् अपश्यत् यः मयूररूपे आसीत्। सः तत्र किमर्थमासीत्, तत् ज्ञातवान्। सः स्वसौन्दर्येण अमृतवर्षिणीं रञ्जयति स्म इति ज्ञात्वा सः क्रुद्धः जातः। सः तं गरुडे परिवर्तितवान् येन सः अवशिष्टं जीवनं सर्पान्, मूषकान् च खादन् यापयेत्। एवं विरूपं जीवनं सः जीवेत्।

सा पौर्णिमायाः रात्रिरासीत्। विवाहस्य सज्जता चन्द्रज्योत्स्नायाः प्रकाशे प्रचलन्ती आसीत्। महिलाः अमृतवर्षिणीं वधूवेषे अलङ्कृत्य विवाहवेदीं प्रति आनीतवत्यः। तत्र सर्वत्र सम्भ्रमः आसीत्।

विवाहं सम्पन्नं भवितुं तथा च वधूकण्ठे मङ्गलसूत्रं बद्धुं नातिकालः अवशिष्टः। प्रदीपः यः इदानीं गरुडरूपे आसीत्, प्रगाढं चिन्तनं



कुर्वन् विवाहस्थानं परितः आकाशे चक्राकारमार्गेण पुनः पुनः भ्रमन्नासीत्। कश्चन विषमयः कृष्णसर्पः उद्यानस्य एकस्मात् पार्श्वात् तस्य बिलात् बहिः उपासर्पत्। तत् दृष्ट्वा प्रदीपस्य मनसि एका कल्पना प्रस्फुरिता। गरुडरूपे सन् प्रदीपः तं विषमयं कृष्णसर्पं पादयोः धृत्वा प्रहर्षणस्य कण्ठे क्षिप्तवान्। सः सर्पः तं दष्टवान् तेन प्रहर्षणः अनुक्षणं मृतः जातः।

प्रहर्षणस्य मृत्योः समनन्तरं मायाविशक्तेः प्रभावोऽपगतः। तेन तत् स्थानं पूर्वतनमिव जातम्। अमृतवर्षिणी तथा च प्रदीपः अवन्तिपुरं प्राप्तौ। अवन्तिसाम्राज्यस्य सम्राट् विक्रमसिंहः प्रदीपस्य शौर्यं धैर्यं च अस्तौत्।

अनन्तरं सः भूपः अमृतवर्षिणीमवोचत्,

"प्रिये कन्ये, प्रदीपेन सह तव मैत्री वृद्धिङ्गतास्ति। चिन्तये यत् त्वं तं प्रीणासीति। यदि त्वं तं प्रीणासि तर्हि अहं तेन सह तव विवाहं रचयामि।"

"अहं राजकन्यास्मि तथा च प्रदीपः एकः सामान्यः जनः। सः मम कृते न अनुरूपः वरः। अहं तं न प्रीणामि। यथा पूर्वं भवान् नियोजितवान् आसीत् तथा कोसलराजपुत्रेण आनन्दवर्धनेन सह मम विवाहं रचयतु। प्रदीपाय सैन्ये उच्चमधिकारपदं यच्छतु" अमृतवर्षिणी न्यवेदयत्। राजा तस्याः निर्णयस्य स्वागतमकरोत् नियोजितं विवाहं च व्यरचयत्।"

कथां निवेद्य प्रेते निवसन् पिशाचः विक्रमं नृपमपृच्छत्, "भोः राजन्, अमृतवर्षिण्याः निर्णयः अतीव स्वार्थी, दुरभिमानी च मह्यं प्रतिभाति। आपत्तेः विमोचकं प्रति कृतज्ञा नाभवदिति तां सर्वे स्मरेयुः इत्यत्र नैव शङ्का। येन सह तस्याः गाढः परिचयः जातः आसीत् तं प्रदीपं निराकृत्य सा आनन्दवर्धनं चितवती यं सा किञ्चिदिव जानाति स्म। यदि त्वमस्य प्रश्नस्य उत्तरं ज्ञात्वापि न वदसि तर्हि तव मस्तकं शतधा विभजेत।"

विक्रमनृपः प्रत्युत्तरमयच्छत्, "अनुबन्धः युद्धं च तदैव अर्हः भवति यदा सः समानेषु भवति। युवाजनेषु दृश्यमाना प्रेमभावना नाम तात्कालिकम् आकर्षणम्। गच्छता कालेन यथा यथा तदाकर्षणं न्यूनं भवति तथा तथा सः स्नेहबन्धः शिथिलः भवति। अत एव सा एतादृश्यां भावनायां न विश्वसितवती। तदपेक्षया सा पितुः निर्णये विश्वासं कृतवती यतो हि तस्य निर्णयः तस्य अनुभवे आधारितः आसीत् तथा च तस्याः हितं मनसि निधायैव कृतः आसीत्। एवं सा तस्याः उज्ज्वल-भविष्यस्य मार्गं सुगमं कृतवती।"

यदा नृपः विक्रमः एवं तस्य मौनमत्यजत् तदा प्रेते वसन् बेतालः प्रेतेन सह अन्तर्हितः वृक्षे च पुनः आरूढः।

*- जी.सुब्रमण्यम् गौड*






# विभाजनम्

उज्जयिनीं निकषा कश्चन भूमिपाल: निवसति स्म। स: परित: विद्यमानानां नवानां ग्रामाणां ग्रामणी: आसीत्। पञ्चक्रोश्यां महाधनिकत्वेन परिगण्यते स्म स:। तस्य चत्वार: पुत्रा: आसन्। तेषु ज्येष्ठ: ग्रामप्रमुख:, द्वितीय: गोवृन्दं पालयति स्म, तृतीय: कृषिकर्मणि रत:, चतुर्थश्च अध्ययनाध्यापनादिषु धार्मिकव्रतपर्वादीनाम् आचरणे च निमग्न: आसीत्।

गच्छता कालेन भूमिपाल: जरसा विकलाङ्गो भूत्वा शय्याधीन: सञ्जात:। स: पुत्रान् आहूय अवोचत, ''अयि पुत्रा:, अद्यावधि ग्रामणीरूपेण न्यायपीठे आसीना: वयम् अस्मत्पूर्वजाश्च अन्येषां कलहानां निराकरणम् उचितनिर्णयेन कृतवन्त:। परम् अस्मास्वेव जायमानं कलहं दूरीकर्तुं नान्यं कमपि आश्रितवन्त: वयम्। अधुना मम मृत्युकाल: सन्निहित:। यूयं सर्वे मम पर्यङ्कस्य समीपे चतुर्षु कोणेषु यथेच्छं तिष्ठत। यदा अहं मरिष्यामि तदा य: यस्मिन् कोणे स्थित: स्यात् तत्रैव भूमिं खनेत्। परं यूयं मिथ: कलहं मा कुरुत'' इति।

चत्वारोऽपि पुत्रा: इच्छानुगुणं प्रत्येकं कोणे स्थिता:। ''कस्यापि कोऽपि आक्षेप: विद्यते किम्?'' भूमिपाल: अपृच्छत्। पुत्रा: न कमपि आक्षेपं प्रदर्शितवन्त:। अन्ते च सन्तुष्टचेतसा भगवन्नामसंस्मरणे लीन: भूत्वा भूमिपाल: स्वर्गत:।

पितु: अन्त्यसंस्कारान् विधाय चत्वार: भ्रातर: पितृवचनानुगुणं खनित्रेन स्वस्वकोणेषु अखनन्। ज्येष्ठभ्राता यत्र अखनत् तत्र तेन केवलं बुसं

एम्.मीरा.राघवैय्या

प्राप्तम्।

द्वितीयेन गोमयं लब्धम्। तृतीयेन तु मृत्तिकायाः ऋते नान्यत् किमपि आप्तम्। परं कनिष्ठभ्रात्रा भूम्यां खनितायां सुवर्णरजतरत्नादिकं प्राप्तम्। तद्दृष्ट्वा अन्ये त्रयः क्रोधसन्तप्ताः जाताः।

'आः! पश्यत!! अनर्हते कनिष्ठभ्रात्रे अस्मत्पित्रा सुवर्णरजतरत्नादिकं सर्वमपि दत्त्वा पक्षपातयुक्तमाचरणं कृतम्। अस्मभ्यं तु केवलं बुसं, गोमयं, मृत्तिकां च दत्त्वा स्वर्गतः सः' इति त्रयोऽपि अचिन्तयन्। ''यत्र वयमिष्टवन्तः तस्मिन् कोणे वयं स्थितवन्तः। युष्मासु इष्टस्थाने स्थितेषु एव अन्ते अहम् उर्वरितकोणे अतिष्ठम्। नात्र विद्यते मम दोषः। एतदेव अस्माकं शिरसि लिखितमासीत्'' कनिष्ठभ्राता अवदत्।

''न हि, न हि, नैतद्युज्यते। अस्माभिः न्यायाधीशं गत्वा अस्य कलहस्य निर्णयः कर्तव्यः'' अन्ये भ्रातरः अवदन्।

ते स्वपितृवचनम् अनादृत्य उज्जयिनीं गत्वा न्यायालये मिथः कलहं न्यवेदयन्। न्यायाधिकारी अपृच्छत्, ''युष्माकं पितुः सम्पत्तिः किम्प्रकारिका कियती चास्ति?''

''अस्माकं पितुः भूमिः, गोवृषभाः, धान्यव्यापारः, सुवर्णरजतरत्नानि चेतिविधा सम्पत्तिः अस्ति'' पुत्राः तस्य प्रश्नम् उदतरन्।

''सा सर्वाऽपि सम्पत् युष्मत्पित्रा युष्मभ्यं दत्तास्ति। धान्यव्यापारं ततः लभ्यमानं धनं च ज्येष्ठभ्रातुः, गोवृन्दः द्वितीयस्य, तृतीयश्च भूमेः स्वामी भविष्यति। सुवर्णरजतरत्नानि कनिष्ठः गृह्णीयात्। इत्थं पितृधनस्य युष्मासु विभाजनं कृत्वा सुखेन कालं यापयत'' इति न्यायाधिकारी स्वनिर्णयम् अश्रावयत्।

अनेन निर्णयेन त्रयाणां भ्रातॄणां महदाश्चर्यम् अभवत्। अन्ततो गत्वा ते अजानन्, यत् पित्रा पक्षपातयुक्ताचरणं सर्वथा न कृतम्।





# अन्यथा चिन्तनम्

पुरा किल सारभः चलमः नाम द्वौ भ्रातरौ वसतः स्म। सारभः चलमस्य, तस्य कनिष्ठभ्रातुः अपेक्षया द्वादश वर्षेभ्यः ज्येष्ठः आसीत्। यदा तयोः मातापितरौ दिवङ्गतौ तदा सारभः तस्य पत्नी सौन्दर्या च तयोः गृहे चलमस्य लालनं पालनं कृतवन्तौ। सौन्दर्या चलमस्य तथा पालनमकरोत् यथा सा स्वपुत्रस्य अकरिष्यत्। तथा च तस्मिन् स्वपुत्रः इव स्नेहमकरोत्।

सारभः न तथा धनवान्। सः स्वस्य लघु-क्षेत्रे कृषिकार्यं करोति स्म। तथा च तस्मात् यदुत्पन्नं भवति स्म तस्मादेव स्वगृहव्ययं कल्पयति स्म। सौन्दर्या अपि तस्मात् अल्पधनात् चातुर्येण गृहव्ययं कृत्वा समाधानेन जीवनं यापयति स्म।

यदा चलमः सुशिक्षितः युवा जातः तदा अनुरूपाणां कन्यकानां पितरौ तस्य कृते विवाहप्रस्तावम् आनेतुं प्रारभेताम्। सारभाय तथा च तस्य पत्न्यै अनन्तस्य कुटुम्बस्य प्रस्तावोऽरोचत। यतो हि तदेकं सुसंस्कृतं कुटुम्बम् अस्तीति तैः ज्ञातम्। अनन्तः अतीव धनिकः आसीत्। तस्य केवलम् एकैव कन्यासीत्। तस्याः नाम कादम्बरी। यदा तौ सम्मतिमदर्शयतां तदा अनन्तः तान् मेलितुमागतवान्। सः तौ अवदत्, ''कृपया मम वचनेन दुःखितौ मा भवतः। कादम्बरी मम अनन्या कन्यास्ति। अतः आवां तां बहुधा लालितवन्तौ। सद्यः तस्याः माता चिरकालात् रुग्णास्ति। पुत्र्याः दर्शनेन विना सा एकमपि दिनं जीवितुं न शक्नोति। युवां मम व्यवसायविषयेऽपि जानीथः। मम पुत्रः नास्ति तेन व्यवसायस्य दायित्वं विभक्तुं न कोऽपि मया सह वर्तते। अतः यदि विवाहानन्तरं युवां तम् अस्माभिः सह उषितुम् अनुमन्येथे तर्हि

ए. पुष्पाञ्जलि



अहम् आजीवनं युवयोः ऋणी भवामि। अहं तस्मै व्यवसायस्य दायित्वं दत्त्वा यशस्विनं करोमि'' इति।

तस्य प्रार्थनया सारभः तस्य पत्नी च दुःखितौ अजायेताम्। एतावत् पर्यन्तं तौ कदापि तस्मात् दूरं न न्यवसताम्। यद्यपि आरम्भे तौ किञ्चित् विषण्णौ जातौ तथापि चलमस्य हितं दृष्ट्वा तथा च अनन्तस्य परिस्थितिं ज्ञात्वा तौ 'विवाहोत्तरं चलमम् अनन्तेन सह उषितुं प्रेषयावः' इति निश्चितवन्तौ। तौ चलममपि तां कल्पनां समाहितवन्तौ। एवं तस्य विवाहः सम्पन्नोऽभवत्।

चलमः तस्य भ्रातरं भ्रातृजायां तथा च तयोः पुत्रान् स्मरन् अतीव दुःखी जातः। परं भ्रातुः आज्ञां परिपाल्य सः श्वशुरस्य गृहम् उषितुं गतः। तत्र श्वशुरस्य गृहे सः याः सुविधाः इच्छति स्म ताः पूर्वमेव कल्पिताः भवन्ति स्म। प्रत्येकं तं सेवते स्म। वचनानुसारम्, अनन्तः तेन सह स्वपुत्रमिवाचरति स्म। सः तं स्वस्य व्यवसाये निपुणमकरोत्। शीघ्रमेव चलमः तीक्ष्णां व्यावसायिकीं बुद्धिं प्राप्तवान्। सः अनन्तस्य व्यवसायस्य दायित्वमपि स्वीकृतवान्।

कादम्बर्याः आचरणं त्यक्त्वा सर्वमुत्तममेवासीत्। यथा सा केवलं एकैव कन्यासीत्, पितृभ्यां सा अतीव लालिता तेन सा अतीव गर्विष्ठा जातासीत्। तस्यै सारभस्य कुटुम्बं न रोचते स्म। सा तस्याः श्वश्रूगृहम् न्यूनातिन्यूनं एकं वा दिनं गन्तुमपि सज्जा नासीत्। लघु-लघु-विषयेषु सा असन्तोषं प्रकटयति स्म। सा तेभ्यः स्वभावेन पूर्णतया भिन्नासीत्। चलमः तस्याः एनं व्यवहारं शान्ततया सहते स्म। परं सः स्वभ्रातरं मेलितुम् एकमपि अवसरं न लभते स्म। एकं तु व्यवसायस्य दायित्वमपरं तु तस्य पत्न्याः स्वभावः।

कादम्बर्याः माता दिवङ्गता तथा च अनन्तस्य प्रकृतिरपि तथा तावती स्वस्था नातिष्ठत। परिणामतः चलमः व्यवसायदायित्वेन पूर्णतया व्यस्तः। तत्र सारभः महत्यामापत्तौ आसीत्। नैसर्गिकसमस्याः एकैकं कृत्वा आगच्छन्त्यः आसन् तथा च सः प्रदेशः यत्र सारभः निवसति स्म अधुना अकालेन ग्रस्तः जातः। तस्य पुत्रः नारायणः तं साहाय्यं कर्तुमितोऽपि समर्थः नासीत्। तस्य पुत्री कमला इदानीं विवाहयोग्या जातासीत्। तथा च तस्याः भविष्यस्य चिन्ता निरन्तरं तं बाधते स्म। मम भ्राता माम् अवगणयतीति

विचिन्त्य सारभः महद्दुःखम् अनुभवति स्म। स्वस्य अनुजेन दर्शिता अनास्था सः नासहत। यतः सः तं स्वपुत्रस्य अपेक्षया सावधानतया संवर्धितवान् आसीत्। तस्य पत्नी 'चलमं गत्वा आत्मनः परिस्थितिं विवृणोतु' इति असूचयत् परं सः हठेन तन्निराकृतवान्। सौन्दर्या पुनः पुनः तं प्रार्थयत। अनुजं गत्वा तं मेलितुं च तं प्रार्थितवती।

अन्येद्युः सारभः यानेन प्रस्थितः यत्र चलमः निवसति स्म। पत्नी येषां वस्तूनां बन्धनं कृत्वा दत्तवती आसीत् तानि स्वीकृत्य सः प्रस्थितः। आदिनं तीव्रे आतपे प्रवासं कृत्वा सः रात्रौ तत्र प्राप्तः। सः यदा तत्र प्राप्तः तदा तेन ज्ञातं यत् चलमः नगरात् बहिः गतवान् अस्ति। सः अतीव खिन्नो जातः। कादम्बरी देवु: योग्यं स्वागतं न कृतवती। अनन्तः, यः रुग्णशय्यायामासीत्, सारभेण सह केवलं प्रेम्णा अवदत् परं तस्मादधिकं न किमपि कर्तुं शक्तवान्। तस्य सेवकाः तं स्वागतकक्षे एव कदन्नं भोजनार्थं दत्तवन्तः। रात्रौ तस्मै शयनाय एकः सामान्यः पर्यङ्कः दत्तः। परं न तत्र उपस्तरणमासीत् न वा कम्बलम्।

सारभः एतादृशेन आचरणेन परिस्थित्या च अतीव खिन्नः जातः। सः मनसि चिन्तितवान्, 'यदि मम अनुजस्य मनसि मम विषये आदरः अभविष्यत् तर्हि अत्र मम सत्कारः एव अभविष्यत्। तस्य हृदये मम विषये न किमपि मूल्यम् नादरः न वा प्रीतिः। तर्हि अन्ये कथं वा मम आदरं कुर्युः ? सः इदानीं धनिकेषु निवसति तेन सः धनस्य अभ्यस्तः जातोऽस्ति। सः इदानीं



पूर्णतया परिवर्तितः अस्ति। न केवलं तावत् अपि तु सः स्वस्य भ्रातृजायामपि विस्मृतवान् अस्ति या तं माता इव संवर्धितवती। सत्यमेव सोऽतीव कृतघ्नोऽस्ति।''

अन्येद्युः कादम्बरी तमागत्य उक्तवती, ''अद्यारभ्य दश दिनानन्तरं तव भ्राता गृहं प्रत्यागच्छति। यदि भवान् आगमनस्य हेतुं मह्यं कथयति तर्हि अहं तस्मै तथा सूचयामि। सारभः तस्याः वचनात् स्पष्टतया ज्ञातवान् यत् सा एवं सूचयन्ती अस्ति इदानीं मया इतः प्रस्थानं करणीयमिति। सः ताम् उक्तवान् ''चलमस्य कृते न कोऽपि सन्देशः''। तदनन्तरं सः गृहप्रत्यागमनस्य प्रवासमारब्धवान्।

मार्गे सारभः दुःखस्य उपेक्षायाः च भावनया विह्वलः जातः। अपमानस्य भावना तस्य मनः

अतीवादुनोत्। अनन्तरं विश्रामं कर्तुं सः कस्यचन वृक्षस्य अधः उपविष्टः।

किञ्चित् समयानन्तरं सारभः अश्वानां पदरवं श्रुत्वा चकितः वेगेन उदतिष्ठत्। तं प्रति आगच्छन्तौ द्वौ पुरुषौ तेन दृष्टौ। तयोः पृष्ठतः तेन द्वे याने दृष्टे। विनाविलम्बं तौ सारभं प्रति आगतवन्तौ अश्वात् अवतीर्णवन्तौ च।

तयोरेकः चलमः आसीत्। अन्यः तु तस्य सेवकः आसीत्। सारभः चलमं दृष्ट्वा अतीव क्रुद्धः। सारभः किमपि वदेत् तस्मात् पूर्वमेव चलमः धावन् तत्र गतः तं पर्यष्वजत् च। ''तात!'' इत्युक्ते सति तस्य नेत्रयोः अश्रूणि आगतानि।

''तात, ह्यः रात्रौ तव आगमनस्य वार्ता मया ज्ञाता। त्वम् एतावत् शीघ्रं ततः प्रस्थानं करिष्यति इति मया नैव चिन्तितम्। यदाहं गृहं प्रत्यागतः तदैव मया अभिज्ञातम्। भवान् माम् मार्गे एव मिलेत् इति आशया अनुक्षणमहं ततः प्रस्थितः। कार्यबाहुल्यात् अहं त्वां मेलितुं न शक्तवान्। परमहं सर्वदा तत्रागमनस्य अवसरम् अन्विष्यामि स्म'' चलमोऽवदत्। पृष्ठतः स्थितानि यानानि दृष्ट्वा सारभः चकितः जातः यतः वर्षद्वयपर्यन्तं सम्पूर्णकुटुम्बस्य कृते पर्याप्तैः अन्नधान्यवस्त्रैः तानि पूर्णानि आसन्।

चलमः एकं स्यूतं सारभस्य हस्ते स्थापयित्वा अगदत्, ''अत्र किञ्चित् धनमस्ति। कृपया ममागमनं यावत् अस्य धनस्य उपयोगं करोतु। अस्माकं परिचितः एकः वरः मया कमलायाः कृते दृष्टोऽस्ति। कमपि शुभमुहूर्तं दृष्ट्वा वयं तस्याः विवाहं कुर्मः। अतः कृपया कस्मिन्नपि विषये चिन्ता मास्तु।

अनुजस्य स्नेहशीलं चिन्तनशीलं वर्तनमनुभूय सारभः तस्य विषये कृतेन अन्यथा चिन्तनेन पश्चात्तापदग्धः जातः। सः प्रेम्णा चलममालिङ्ग्य रोदनमारभत'' इति।

सारभः तं तस्य ग्रामं यावत् यानेन प्रापितवान्। वस्तुभिः पूर्णानि यानानि तमन्वसरन्। इदानीं तस्य मनः शान्तं जातमासीत्।





# पञ्चतन्त्रकथा

सिंहः स्नातुं नदीम् अगच्छत्। तस्मिन् गते सति शृगालः वृकाय अकथयत्,''रे वयस्य, क्षुधार्तः दृश्यसे त्वम्। यावत् अस्मत्स्वामी अनागतः तावत् यदि इच्छसि चेत् उष्ट्रस्य किञ्चित् मांसं खादितुम् अर्हसि। त्वं निर्दोषः असि इति अहं स्वामिने प्रतिपादयिष्यामि'' इति।

वृकः मृतस्य तु इममेव अवसरं प्रतीक्षमाणः आसीत्। शृगालस्य मुखात् एतद् वाक्यं श्रुत्वा अनुक्षणं वृकः उष्ट्रस्य हृदयं खादितवान्।

प्रत्यागतेन शार्दूलेन अवलक्षितं यत् उष्ट्रस्य हृदयं न दृश्यते। क्रोधाविष्टः सन् सः महत्या गर्जनया अवदत्,''मत्पूर्वमिव कश्चन उष्ट्रस्य हृदयं खादितवान् अस्ति। तस्य वधं कृत्वा एव अधुना मम भोजनं समापयामि'' इति।

वृकः अगतिकतया शृगालं प्रति दृष्टवान्। तस्य दृष्टिक्षेपे तथा अर्थः आसीत् यत् प्रायः सः एवं वक्तुकामः आसीत् यत्,'त्वमेव सिंहाय अस्मिन् विषये सम्यक् विवरणं कथयिष्यसि। त्वयि एव विश्वस्य मया उष्ट्रस्य मांसं भक्षितम्। अधुना त्वया यथाकथञ्चितदपि अहं रक्षणीयः' इति। किन्तु शृगालः तु किञ्चित् विहस्य उक्तवान्, ''रे मित्र, किमर्थं माम् एवम् अवलोकयसि? उष्ट्रस्य हृदयं तु त्वया एव खादितं नु अधुना?''

भीत्या कम्पमानः वृकः अकस्मात् ततः धावितुम् आरभत। बहुदूरं यावत् तम् अनुधाव्य सिंहः एवं विचिन्त्य पुनरागतः यत् 'वृकस्य नायं महापराधः। किमर्थं तं वृथैव हन्मि' इति।

प्रत्यागमनसमये सिंहेन कश्चन घण्टानादः श्रुतः। उष्ट्रवणिजां कश्चन गणः ततः गच्छन् आसीत्। तस्मिन् गणे सर्वेषाम् उष्ट्राणां कण्ठे

मित्रभेदः-२५



बद्धा: घण्टा: निनादं कुर्वत्य: आसन्।

सिंह: शृगालमपृच्छत्, "कोऽयं ध्वनि:?" इति।

"महाराज, भवान् इत: पलायनं करोतु। भवत्पुरत: महत्सङ्कटं समुपस्थास्यति अधुना" इत्युक्त्वा शृगाल: सिंहम् अभाययत्। "किं सङ्कटम्? कथं, कुत: च उद्भवेत्? स्पष्टं वद सर्वम्" इति सिंह: पृष्टवान्।

"उष्ट्रस्य वधात् पूर्वं भवता मृत्युदेवतायै शतप्रतिशतं वृद्धिमूल्यं दातुं प्रतिश्रुतमासीत्। अधुना वृद्धिसहितं मूलधनमपि स्वीकर्तुं मृत्युदेव: आगच्छन् अस्ति" शृगाल: उक्तवान्।

मृत्युदेवस्य आगमनवार्तां श्रुत्वा सिंह: उत्थाय तत: पलायित:। तदनन्तरं बहूनि दिनानि यावत् शृगाल: सातत्येन नि:शङ्कया च उष्ट्रस्य मांसं खादन् तत्रैव स्थित:।

दमनके गते सति सञ्जीवक: मनसि अचिन्तयत्, 'किं मया कर्तव्यमधुना? पलायनं कुर्याम्? न, न .... तथा कृत्वा न कोऽपि लाभ: स्यात्। यतो हि अस्मिन् महत्यरण्ये अहं निश्चयेन कस्यचित् व्याघ्रस्य भक्ष्यं भवेयम्। सिंहेन सहापि अधुना शत्रुत्वं जातम्। अत: अधुना तु एकमेवोपाय: वर्तते मत्समीपे, तं शार्दूलम् उपगम्य अभयदानं याचनीयम्।' एवं विचिन्त्य सञ्जीवक: पिङ्गलकं प्रति आगत:। दमनकस्य कथनानुसारं सिंह: पूर्वमेव पुच्छं वक्रीकृत्य उपविष्ट: आसीत्। क्रोधेन स्वहस्ततलम् आकृष्ट तीक्ष्णदृष्ट्या सञ्जीवकं पश्यन् आसीत्। एतानि सर्वाण्यपि लक्षणानि सावधानेन वीक्ष्य सञ्जीवक: सिंहम् आक्रान्तुं सिद्धोऽभवत्। अधोमुख: भूत्वा स्वशृङ्गाभ्यां सिंहं हन्तुं स: तं प्रति अधावत्।

पिङ्गलकोऽपि सञ्जीवके तानि सर्वाणि चिह्नानि अपश्यत् यानि दमनकेन उक्तानि आसन्। तर्हि किं वक्तव्यमधुना! सिंह: सञ्जीवकम् आक्राम्य स्वस्य तीक्ष्णनखै: तस्य शरीरं व्यदारयत्। व्रणित: भूत्वा अपि सञ्जीवकेन शृङ्गाभ्यां सिंहस्य शरीरे प्रहार कृत:। किञ्चित् पृष्ठत: भूत्वा पुन: आक्रमणाय सज्ज: अभवत् स:।

एवं तौ द्वौ अपि परस्परं प्रहर्तुं सिद्धौ जातौ। एतत् दृष्ट्वा करटक: दमनकम् अवदत्, 'रे दुष्ट, त्वया मित्रयो: भेदमुत्पाद्य महत्पापम् आचरितम्। शान्तिपूर्णे अस्मिन्नरण्ये त्वया अशान्तता जनिता।

न केवलं तावत् अपि तु कुबुद्ध्या त्वया अस्माकं स्वामिन: प्राणा: सङ्कटे पातिता:। अन्यै: सह चर्चयितुं तयो: कृते अवसर: एव न दत्त: त्वया। स्वयमेव सर्वं चर्चयित्वा भेद: उत्पादित:। त्वादृशस्य मूर्खस्य सूचनां श्रुण्वत: अस्माकं राज्ञ: कृते मम मन: द्रवति। तत्र तस्यापि दोष: अस्ति एव। मूर्खा: राजान: त्वादृशानां स्वार्थीजनानां सूचनाम् अवलम्ब स्वविनाशं प्रति गच्छन्ति। त्वादृशाय दुष्टाय तु हितवचनानि अपि मया न कथनीयानि। यदि कथयेयम् तर्हि तस्मै मर्कटाय श्रावितानि हितवचनानि यथा वृथा गतानि तथैव मम वचनानि अपि वृथा एव भविष्यन्ति'' इति।

''मर्कटाय श्रावितानां हितवचनानां का सा कथा?'' इति दमनकेन पृष्टे सति करटक: इत्थं कथां श्रावितवान्।

### व्यर्थं हितम्

''**आ**सीत् एकस्मिन्नरण्ये वानराणां यूथ:। शैत्यकाले सर्वेऽपि वानरा: शैत्येन कम्पमाना: आसन्। तदा तै: कश्चन खद्योत: दृष्ट:। तं खद्योतम् अङ्गारं मत्वा तस्य साहाय्येन ते अग्निं जनयितुम् ऐच्छन्। अत: तं खद्योतं गृहीत्वा तस्योपरि शुष्कपर्णानि निक्षिप्य तां शुष्कपर्णराशिं परित: उष्णतां प्राप्तुं सर्वेऽपि मर्कटा: उपविष्टा:।

एकं मर्कटं शैत्यम् अधिकम् अबाधत। अत: शीघ्रातिशीघ्रम् उष्णतां प्राप्तुं तेन खद्योते फूत्कार: कृत:। समीपस्थे वृक्षे उपविष्ट: सूचिमुखी नाम्ना खगेन एतत् सर्वं दृष्टम्। तेन उक्तम्,''अयि मित्राणि, यूयं सर्वे वृथैव श्राम्यथ। अयं तु खद्योत: विद्यते न तु अङ्गार:'' इति।

किन्तु मर्कटेन सूचिमुखिन: वचनेषु अवधानं न दत्तमेव प्रत्युत फूत्करणं तथैव अनुवर्तितम्।

सूचिमुखी पौन: पुन्येन वानराय कथयन् आसीत्। सूचनया क्रोधाविष्ट: सन् वानर: खगाय तूष्णीं स्थातुम् अकथयत्। किन्तु तथापि सूचिमुखी वानराय पुन: सूचनां कृतवान्।

*(अनुवर्तते)*





# प्रशस्तमृद्

**मा**ता परा देवता' इत्येनं पाठं पाठयितुम् आरभत अध्यापक:। विलम्बेन शालां प्राप्तवान् किशोर: कक्ष्याया: द्वारि स्थित्वा अध्यापकम् अपृच्छत्, ''श्रीमन्, अहं प्रविशानि किम्?'' अध्यापक: तं दृष्ट्वा अवदत्, ''अस्तु प्रविश। कुत: विलम्बेन आगतोऽसि?'' किशोर: अवदत, ''अद्य प्रात: मम माता मां समये न जागरितवती। अत: एव विलम्ब:।''

तच्छ्रुत्वा मनसि किमपि विचिन्त्य अध्यापक: अब्रवीत्, ''किमर्थं तव मात्रा त्वं जागरणीय:? यदि रात्रौ त्वं समये निद्रां गच्छसि चेत् प्रात: सूर्योदये एव निद्राया: जागृतो भवितुं शक्नोषि।''

''श्रीमन्, मम पिता रात्रौ दूरदर्शनं पश्यति। तत्र चित्रपटदर्शनं मह्यमपि अतीव रोचते। अत: अहमपि रात्रौ बहुकालं यावत् दूरदर्शनं पश्यामि। तदा मम मात्रा अहं निद्रां कर्तुं वक्तव्य: खलु?'' इत्यवदत् किशोर:। स्वमातरि स: वृथारोपं करोति स्म इति स: नैव अवागच्छत्।

सर्वेऽपि छात्रा: एतदुत्तरं श्रुत्वा उच्चै: अहसन्। शिक्षक: बालकान् तूष्णीं स्थातुम् आदिशत् किशोरम् अपृच्छच्च, ''भवतु नाम तत्। त्वया गृहपाठ: कृत: वा?''

तदाकर्ण्य वाचि स्खलन् किशोर: वक्तुं प्रायतत, ''गृहपाठ: ...तन्नाम ...मया तु ...''

कक्ष्यायां पृष्ठे उपविष्ट: कश्चन चटुल: छात्र: सहसा उच्चै: अवदत्, ''श्रीमन्, तस्य माता तं गृहपाठं कर्तुं न उक्तवती स्यात्!'' सर्वेऽपि बालका: पुनरपि अहसन्।

अध्यापक: किशोरम् अपृच्छत्, ''तव मात्रा

पी.व्ही.सत्यनारायणन्

अकथितम् अनादिष्टं वा किमपि कार्यं त्वं न करोषि किम्?''

अनेन प्रश्नेन सन्त्रस्त: किशोर: भाषणस्वरे उत्तरं वक्तुम् असहमतिं प्रदर्शयन् कथञ्चित् अवदत्, ''न तथा श्रीमन्! वस्तुतस्तु मात्रा उक्तं किमपि कार्यं कर्तुं नेच्छाम्यहम्।''

अध्यापक: तत् श्रुत्वा महदाश्चर्यम् अन्वभवत् - ''किमर्थम्? कथय मह्यं, किं कर्तुं सा त्वाम् आदिशति, येन ते पीडा जायते?''

किशोर: भययुक्तदृष्ट्या शिक्षकम् अपश्यत्।

''चिन्ता मास्तु! सत्यं वद। अहं त्वां न दण्डयामि।''

तदाकर्ण्य किशोर: अभयं प्राप्नोत् अवदच्च, ''श्रीमन्, मम माता मां प्रात: शीघ्रम् उत्थातुं वदति, रात्रे: प्रागेव गृहपाठं समापयितुम् आदिशति....।'' स: अकस्मात् मौनम् आश्रयत्।

''परम् एतानि सर्वाण्यपि कार्याणि योग्यानि तव हिताय च, सत्यं खलु?''

''श्रीमन्, सा मां मम पित्रा सह चित्रपटदर्शनात् वारयति रात्रौ शीघ्रं निद्रां कर्तुं वदति च। यदि मम पिता एव चित्रपटदर्शनस्य मोहं संयन्तुं न शक्नोति चेत् मम बालस्य का कथा? यदि मम माता मम प्रियकर्मभ्य: मां रोधयति तर्हि तन्मम पीडां न जनयेत् वा?''

शिक्षक: दु:खेन नि:श्वस्य अचिन्तयत्, ''अधुना मया सर्वापि समस्या समूलमवगता।''

स: किशोरम् अवदत्, 'किशोर,' अलं समस्याकथनेन। वद, किमहं तुभ्यं रोचे?''



''आं श्रीमन्! भवान् मह्यम् अतीव रोचते। न तु केवलं मह्यं अपि तु सर्वेभ्य: छात्रेभ्य: रोचते भवान्।''

''एवं तर्हि मम वचनम् अनुतिष्ठसि?''

''आं श्रीमन्, नि:सन्देहम्!''

''तुभ्यं तव माता न रोचते खलु? तर्हि गृहात् तस्या: निर्गमनमेव योग्यम्।''

तदाकर्ण्य अज्ञात्वैव किशोरस्य नेत्रे बाष्पपूर्णे सञ्जाते। ''श्रीमन्!!!'' स: चकित: सन् आक्रोशदिव।

शिक्षक: तस्य स्वरात् तस्य मन:स्थितिं पूर्वमेव ज्ञातवान्। स: किशोरं गभीरस्वरेण अवदत्,''किशोर, सा सततमेव तव अनिष्टानि कर्माणि त्वाम् आदिशति खलु?''

''परं सा मां महत्या प्रीत्या भोजयति।

रोगग्रस्ते मयि आरात्रि सर्वमपि समयं मम समीपे उपविश्य प्रतिक्षणं मां सेवते।''

''एवं सति सा एव तव प्रिया माता त्वाम् अप्रियाणि कार्याणि आदिशति इति कथं मन्यसे?''

किशोर: किमपि उत्तरं नास्मरत्।

अधुना अध्यापक: स्नेहार्द्रेण स्वरेण अवदत्, ''वत्स, जगत: रचयित्रा परमेश्वरेण अस्माकं कृते माता निर्मिता, यत: परमकृपालु: स: सर्वत्र युगपद् भवितुं न शक्नोति। न मातु: परं दैवतसदृश: कोऽपि अस्मिन् संसारे। नवमासान् यावत् सा त्वां स्वगर्भे धृतवती। आजन्म सा त्वां सर्वदा लालयति पालयति च। माता स्वापत्यानि सदा साध्वसाधुताविषये बोधयति। 'मम पुत्रा: सदाचारिण: भवन्तु, तेषां कीर्ति: विश्वे सर्वत्र प्रसृता भवतु' इत्येव इच्छति सा। दुराचरणेन मातु: पीडनं पापाय। यदि त्वं रात्रौ समये निद्रां करिष्यसि चेत् प्रात: अपि शीघ्रम् उत्थातुं शक्ष्यसि, तेन च शालागमने तव विलम्ब: न भविष्यति। यदि त्वं रात्रावेव गृहपाठं करिष्यसि चेत् शालायां वृथा दण्डनं न प्राप्स्यसि। शालायां पठने त्वं यथा कष्टं नानुभवे:, तथा कार्यं कर्तुं माता त्वां वदति।''

किशोर: स्वाचरणेन पश्चात्तापम् अन्वभवत्। मम आचरणं दुष्टमेवास्ति इत्यशोचत् स:।

अध्यापक: सर्वामपि कक्ष्याम् उद्दिश्य अब्रवीत्, ''प्रियच्छात्रा:! एष एव अद्यतनपाठ:। देवतावत् मातरम् आद्रियन्ताम्। माता किमर्थम् आदरार्हा इति यूयं ज्ञातवन्त: स्यात''।

एवं भाषमाणस्य तस्य घण्टानाद: अजायत। किशोर: अध्यापकस्य वचनानि मनसि पौन:पुन्येन चिन्तयन् तेषु एव रत: आसीत्। स: स्वयं मातुराज्ञां पालयेत् तथा कर्तुं स्वसारमपि वदेत् इति स: निरचिनोत्।

बालानां चित्तानि प्रशस्तमृदिव सन्ति। साधुविचाराणां बीजेषु तस्यां मृत्स्नायाम् उप्तेषु तानि सरलतया वृक्षत्वं गत्वा फलन्ति इति तथ्यं स: अध्यापक: जानाति स्म।





# मित्रद्रोही

मम ग्रामे वसन्त: सर्वे ग्रामस्था: विशालापणे स्थितताया: विक्रयशालाया: पतिं-नारायणस्वामिनम् अजानन्। नारायणस्वामी एकाकी आसीत्। अत: स: रङ्गाजिं स्वगृहे निवासार्थम् आमन्त्रितवान्। स:तेन सह आत्मवृत्त्या एव आचरत्। एवं दशवर्षाणि अतीतानि। उभयो: मध्ये किम् अभवत् न कोऽपि अजानात्। किन्तु सहसा रङ्गाजि: निवासार्थं स्वग्रामम् अगच्छत्।

यदा वयं बाला: 'रङ्गाजि: नारायणस्वामिनं त्यक्त्वा निरगच्छत्' इति वार्तां श्रुतवन्त: तदा वयं पितामहम् पृष्टवन्त: ''नारायणस्वामिना रङ्गाजि: सहसा कस्मात् कारणात् निष्कासित:?'' पितामह: प्रत्युदतरत् ''स्वामिना रङ्गाजि: न निष्कासित:। न एष: अर्थव्यवहारस्यापि प्रश्न:''। तदनन्तरं 'यद् अभवत्' तत्कथयितुं स: प्रारभत।

बाल्ये एव नारायणस्वामी स्वपितृभ्यां वियुक्त:। न केवलम् एतावत्, किन्तु तस्य सबालभार्याया: बियोग: अपि प्रसबानन्तरम् अभवत्। एवं स: इहलोके एकाकी जात:। वीतराग: स: न पुनर्बिवाहं स्वीकृतवान्। 'व्यापार: एव जीवनम्' इति मत्वा स: स्वजीवनं यापयति स्म। तस्मिन्नेव काले स: स्वबालमित्रं रङ्गाजिम् अमिलत्। तत: प्रभृति तयो: मित्रत्वं दृढम् अभवत्।

रङ्गाजि: न केवलम् एकाकी किन्तु निर्धनोऽपि आसीत्। नारायणस्वामी तस्य क्षमताम् जानाति स्म तस्य शुचितां च बहु मन्यते स्म। अत: स: तं प्रशिक्ष्य व्यापारभागिनं कर्तुम् ऐच्छत्। किन्तु

ए. रामकृष्णन् राव

रङ्गाजि: एतद् नैव अमन्यत। स: विनयेन अवदत् ''मयि त्वं स्निह्यसि। मम हितरक्षणं करोषि। मम उपजीविकाविषये दक्षोऽसि। अत: मम जीवनयापनं एवमेव भवतु इत्यर्थम् अनुज्ञां याचे अहम्।''

एकदा स्वामिन: अङ्गुलीयकात् अमूल्य: हीरक: भ्रष्ट:। तम् अन्वेष्टुं स: बहु प्रायतत। अङ्गुलीयकं तस्य अतीव प्रियं यतो हि भार्याया दत्त: उपहार: आसीत् स:। हीरक: विदेशात् आयात: तथैव दुर्लभोऽपि अवर्तत। स्वामी रङ्गाजिं नैकवारं कथितवान् यत् 'हीरकस्य मूल्यं अर्धकोटीमितम् अस्ति'। रङ्गाजे: प्रकोष्ठ: स्वामिप्रकोष्ठस्य समीपमेवासीत्। उभौ वर्जयित्वा न कोऽपि कक्षौ प्रवेष्टुं समर्थ:। 'प्रभाते हीरक: स्वस्थाने आसीत्' इति स्वामी अस्मरत्। कथं साम्प्रतम् एष: नष्ट: ?' इति स: अचिन्तयत्।

नारायणस्वामी रङ्गाजे: कक्षं प्रविश्य अवदत् ''मनोदौर्बल्यात् त्वया कदाचित् हीरक: अपहृत: भवेत्। न एतद् अहं मनसि रक्षामि। न कस्मै अपि कथयामि। प्रत्यर्पय मे हीरकम्'' इति उक्त्वा स: स्वकक्षं प्रत्यागत:। अतीते कस्मिंश्चित् काले स्वामी हीरकं स्वप्रावरणपुटे अपश्यत्। स्वप्रमादेन लज्जित: कृताञ्जलि: नारायणस्वामी क्षमायाचनाम् अकरोत्।

रङ्गाजि: स्वपोटलिकां गृहीत्वा निर्गमनार्थं सज्ज: आसीत्। गमनस्थगनार्थं नैकवारं प्रार्थितोऽपि रङ्गाजि: गृहात् निरगच्छत्। गमनात् प्राक् स: सुतीक्ष्णान् शब्दान् श्रावितवान् ये स्वमुखे प्रहारा: इव अभासन्त नारायणस्वामिने। स: अवदत्, ''भो: श्रेष्ठिन्, भवान् मां चौरम् अमन्यत। तदा मे प्रमाद: ज्ञात: मया यदहं भवन्तं सुजनं अमन्ये''। मानवसम्बन्ध: परस्परविश्वासेन एव दृढ: भवति। यथा काचभङ्गानन्तरं काच: पुन: संलग्नीभवितुम् असमर्थ: तद्वत् विश्वास-भङ्गानन्तरं सुसम्बन्ध: अशक्य:। सुजना: तत्र क्षणमपि स्थातुम् असमर्था:।''





# स्पर्धा

अस्ति रत्नचारी नाम एक: श्रेष्ठी यस्य जनुपल्ली नाम ग्रामे मिष्टान्नस्य आपणा: आसन्। वंशपरम्परया मिष्टान्नविक्रयणं तस्य कुटुम्बस्य व्यापार: आसीत्। तै: विक्रीतानि मिष्टान्नानि अतीव प्रियाणि समीपवर्तिषु ग्रामेषु अपि। तेषां व्यापार: समृद्ध: अभवत् यत: ते उत्तमानि मिष्टान्नानि सम्यक् मूल्येन वितरन्ति स्म।

परन्तु एषा परिस्थिति: नारोचत रत्नचारिणे। अधिकलाभार्थं स: लोभाविष्ट: सञ्जात:। वस्तूनां मूल्यं यदि वर्धितं भवेत् तर्हि जना: तत् न स्वीकरिष्यन्ति इति जानाति स:। किन्तु यदि तेन मूल्यवर्धनं न कृतं तर्हि तस्य लाभवृद्धिरपि न भवेत्। अत: अस्मिन् विषये तेन चिन्तनं कृतम्। स: मिष्टान्नस्य आकारं किञ्चित् न्यूनं कृत्वा गुणवत्तामपि एवं प्रकारेण किञ्चित् न्यूनम् अकरोत् यद् जनानाम् अवधानं तत्र न गच्छेत्।

तस्यापणस्य मिष्टान्न-वस्तुविषये जनमानसे एतादृश: विश्वास: आसीद् यद् तै: मिष्टान्नस्य किञ्चित् परिवर्तनविषये किमपि न लक्षितम्। मिष्टान्नस्य आकारगुणपरिवर्तनविषये तै: न किमपि ज्ञातम्। परिणामत: रत्नचारिण: मनोधैर्यम् अधिकम् अवर्धत येन स: मिष्टान्नस्य आकार: तथा गुणम् अधिकं न्यूनम् अकरोत्। तथापि जना: रत्नचारिण: आपणत: वस्तूनि क्रीणन्ति स्म। यत: तेषां कृते अन्य: पर्याय: उपलब्ध: नासीत्।

ग्रामप्रमुख: मनमोहन: जनमुखात् अस्य विषये अजानीत। रत्नचारिण: कुटुम्बं विशालं सुप्रसिद्धं च आसीत्। अत: तेषां विषये प्रत्यक्षारोपण दोषदर्शनं च अयुक्तं भवेत् इति चिन्तयति मनमोहन:। अत: तेन एक: तादृश:

पी.वेङ्कटेश्वर राव

उपाय: चिन्तित: येन परोक्षम् अपि सम्यक् परिणाम: भवेत्। तं विचारम् अनुसृत्य तस्मिन् ग्रामे एकस्मात् सप्ताहात् एव मिष्टान्नस्य एकं नवीनम् आपणम् अस्थायीरुपेण निर्मितं दृष्टिपथम् आगतम्। यत्र प्रशस्यतरं मिष्टान्नं रत्नचारिण: आपणस्य तुलनया योग्यमूल्येन उपलब्धम् आसीत्। अत: बहव: जना: तत्र आगच्छन्ति स्म।

शनै: शनै: रत्नचारिण: आपणस्य सर्वे ग्राहका: न्यूनीभूता:। येन केवलं मिष्टान्नस्य उपरि उपविष्टानां मक्षिकाणाम् उड्डयने स: रत: अभवत्। यदि एतादृशी परिस्थिति: भवेत् तर्हि अहम् अकिञ्चन: भवेयम् इति चिन्तितं रत्नचारिणा। अत: तेन पुन: पूर्वजानाम् उत्तम: मार्ग: अनुसृत: उत्तममिष्टान्नस्य क्रयणं प्रारब्धं च।

तेषां मूल्यमपि यथायोग्यं निर्धारितं येन योग्य: लाभ: तस्य कृते भवेत्। कृतस्य परिवर्तनस्य विज्ञापनमपि तेन कृतम्। एतेन प्रयत्नेन प्रतिष्ठा पुन: प्राप्ता। तदैव मिष्टान्नस्य अस्थायी आपणम् अदृश्यम् अभवत्।

यदा मनमोहन: रत्नचारिण: आपणं मिष्टान्नं स्वीकर्तुम् आगत: तदा ''त्वया सम्यक् पाठ: पाठित:। पश्यतु, अधुना स: योग्यमूल्येन उत्तमं मिष्टान्नं विक्रीणीते'' इति अवदत् मनमोहनाय रत्नचारिण: भार्या।

''यदा स्पर्धाया: अभाव: भवति, यदा एकाधिकार: भवति तदा व्यवसायिन: अलसा: अतिविश्वासोपगमा: च भवन्ति। तेन ग्राहकाणां हानि: भवति। सुयोग्या स्पर्धा स्यात् तर्हि वणिज: अतिलोभिन: न भवन्ति। प्रत्युत स्ववस्तुविषये ग्राहकविश्वाससंपादनार्थम्, अस्तित्वं तत्र दृढं भवेत् एतदर्थं ते चिन्तयिष्यन्ति एव। अत एव रत्नचारिण: कृते मया स्पर्धात्मकापणं निर्मितम्। तेन स: ग्राहकेभ्य: उत्तमं मिष्टान्नं यच्छेत्, तद् निर्मातुं प्रवृत्त: भवेत्'' इति स्थालिकास्थितमिष्टान्नस्य ग्रासं गृह्णन् मनमोहन: अवदत्।





# अहङ्कारः

**पू**र्वं कुमुदः नामकः महर्षिः विष्णुदर्शनार्थं तपः आचरितवान्। तस्य तपसा प्रीतः विष्णुः लक्ष्म्या सह प्रत्यक्षः अभवत्। भगवान् विष्णुः कुमुदम् अवदत् ''भक्त! अभीष्टं वरं पृच्छतु। ददामि'' इति।

कुमुदः तु केवलं भगवद्दर्शनार्थं तपः अकरोत्। तस्य कापि अन्या इच्छा तु नास्त्येव।

भगवतः वचनं श्रुत्वा सः किमपि वक्तुं न शक्तवान्।

लक्ष्मी: कुमुदस्य मनःस्थितिं ज्ञात्वा –''भक्त! आवां भवतः भक्तिं प्रशंसावहे। इदानीमेव वरस्य याचनाया: आवश्यकता नास्ति। एकमासानन्तरम् आवां पुनः आगाच्छावः। तावदभ्यन्तरे सम्यग्विचार्य अपेक्षितं वरं प्रष्टुं शक्नोषि।''

लक्ष्म्याः वचनं श्रुत्वा कुमुदस्य मनः शान्तं जातम्। तत्क्षणं विष्णुः लक्ष्म्या सह अन्तर्धानः अभवत्।

कुमुदः स्वतपसः सफलत्वे अत्यन्तं सन्तुष्टः जातः। आश्रमं गत्वा कुमुदः स्वशिष्यान् विषयं श्रावितवान्।

शिष्याः गुरोः तपश्शक्तिं ज्ञात्वा अत्यन्तं गर्विष्ठाः अभवन्। साक्षात् नारायणः वरं दातुं सिद्धः चेदपि गुरुः न स्वीकृतवान् इति ते सहस्रकण्ठैः

मधुराश्रीः



प्रशंसन्ति। चतुर्दशलोकेषु अपि एतादृशः त्यागी, महात्मा, महाभक्तः, अनासक्तः, योगी न विद्यते। एतादृशप्रशंसां श्रुत्वा कुमुदः अत्यन्तं गर्विष्ठः अभवत्। अस्मिन् संसारे आत्मनः श्रेष्ठतरः महर्षिः नास्ति इति सः चिन्तयति स्म।

तादृशपरिस्थितौ एकवारं कुमुदः स्वशिष्यैः सह स्नानार्थं गङ्गां गतवान्। स्नात्वा प्रत्यागच्छन् सः रेवतनामकं राजर्षिम् अपश्यत्। तं, तस्य पत्नीं, पुत्रान् च दृष्ट्वा शिष्याः अचिन्तयन् 'एषः कथं महर्षिः भवति?' इति। आत्मनः सन्देहं ते गुरुम् अपृच्छन्। तदा गुरुः ''अस्मिन् रेवते ऋषेः योगता कापि न दृश्यते। सर्वं परित्यज्य केवलं कन्दमूलं ये खादन्ति तेभ्यः अपि देवदर्शनं दुर्लभम्। तर्हि एतादृशानां का स्थितिः?''

एवं यद्यपि कुमुदेन उक्तं तथापि तस्य अपि स्ववचनेन तृप्तिः न जाता। 'कतिपय दिनानन्तरं विष्णुः प्रत्यक्षः भविष्यति खलु' तमेव साक्षात् प्रक्ष्यामि इति कुमुदः निश्चितवान्।

एकमासानन्तरं विष्णुः यथोक्तं लक्ष्म्या सह प्रत्यक्षः अभवत्। कुमुदः स्व-वरस्य विषयं विस्मृत्य रैवतस्य विषये उत्पन्नं सन्देहं निवारयितुं नारायणं प्रार्थितवान्।

नारायणः हसित्वा ''कुमुद! मह्यं भक्तिः प्रधानम्। यदि मनः निर्मलं न भवति तर्हि सन्यासी-जीवनस्य किं वा प्रयोजनम्? यदि इतोऽपि भवान् एतस्य संशयस्य समाधानं प्राप्तुम् इच्छति तर्हि श्रीशैलस्य समीपे विद्यामानं स्वर्णाग्रहारं गच्छतु।

तत्र सुधर्मा नामकः कश्चित् भवति। सः भवतः संशयस्य समाधानं दद्यात्'' इति उक्त्वा विष्णुः अन्तर्धानः अभवत्।

झटिति कुमुदः स्वशिष्यैः सह स्वर्णाग्रहारं प्रस्थितवान्। कतिचन दिनानां यात्रां कृत्वा ते श्रीशैलं प्राप्तवन्तः। तत्र कुमुदः शिष्यैः सह स्नानार्थं पातालगङ्गां गतवान्। यदा कुमुदः स्नानम् आरब्धवान् तदा केनचित् मकरेण कुमुदस्य पादः गृहीतः।

मकरेण गृहीतं गुरुं दृष्ट्वा शिष्याः उच्चैः आक्रन्दनं कृतवन्तः। किन्तु कुमुदः एकाग्रदृष्ट्या मकरम् अपश्यत्। कुमुदस्य तपश्शक्त्या मकरः तत्क्षणं तत्रैव मृतः। अनेन कुमुदस्य अहङ्कारः इतोऽपि प्रवृद्धः।

ततः प्रस्थाय दिनद्वये ते सर्वे स्वर्णाग्रहारं प्राप्तवन्तः। यदा ते प्राप्तवन्तः तदा सुधर्मा गृहे नासीत्। तस्य पत्नी वातायनस्य समीपे उपविश्य छिद्रयुक्तां पुरातनीं शाटिकां सीवति स्म। कुमुदं दृष्ट्वा ''मम पत्युः आगमनपर्यन्तं बहिः आवरणे उपविशन्तु'' इति उक्तवती।

तेन समुचितम् आतिथ्यं, गौरवं च न प्राप्तमिति कुमुदः अत्यन्तं क्रुद्धः। एकाग्रया, उग्रदृष्ट्या च कुमुदः ताम् अपश्यत्। किन्तु सा मकरः इव न मृता।



तेन कुमुदस्य स्वतपश्शक्तेः उपरि शङ्का जाता। अत्रान्तरे सुधर्मा गृहं प्राप्तवान्। अतिथीन् सर्वान् गृहस्य अन्तः नीत्वा यथोचितम् आतिथिसत्कारं कृतवान् सुधर्मा। तस्य पत्नी पाकादिकं कृत्वा भोजनं परिवेषितवती।

कुमुदः अपि भोजनार्थम् पर्णस्य समीपे उपविष्टवान्। किन्तु भोजनपदार्थाः सर्वे शीतलाः आसन्। क्रुद्धः कुमुदः सुधर्माणं परिहासेन ''सुधर्मन्! खाद्यपदार्थाः बहु उष्णमयाः सन्ति'' इति उक्तवान्।

''तर्हि स्वामिन्! अहं व्यजनेन वायुं वातयामि'' इत्युक्त्वा सुधर्मा व्यजनेन

बीजयति स्म। क्षणाभ्यन्तरे पर्णे विद्यमानाः सर्वे पदर्थाः उष्णमयाः अभवन्। ततः बाष्पवायुरपि आगच्छति स्म। तद्दृष्ट्वा आश्चर्यचकितो अभवत् कुमुदः।

भोजनात् परं हस्तं प्रक्षालयितुं कुमुदः यदा कूपसमीपम् अगच्छत् तदा अन्यदेकं दृश्यम् अपश्यत्। कूपे दोलायमाना अर्धम् आकृष्टा जलपूर्णा द्रोणी सन्दृष्टा कुमुदेन। सा च द्रोणी अधः न पतति स्म।

''जलम् आकर्षन्ती अहं पतिना यदा आहूता तदा रज्जुं मध्ये एव त्यक्त्वा गतवती'' इति सुधर्मणः पत्नी अवदत्।

'मत्तः श्रेष्ठः नान्यः विद्यते, संसारकूपे मग्नाः सर्वे अधमाः' इति चिन्तयतः कुमुदस्य अनेन दृश्येन गर्वभङ्गः जातः।

सुधर्माणं नमस्कृत्य कुमुदः अवोचत, ''सुधर्मन्! भवान् महान् अस्ति। संसारम् अपरित्यज्य यः तपश्चरति किं सः मोक्षं प्राप्स्यति?'' इति पृष्टवान्।

सुधर्मा ''कुमुद, निर्मलमनसा यः भगवन्तम् आराधयति सः मोक्षाय अर्हः भवति। कन्दमूलादिकम् खादन् अरण्ये वसन्, अपि यः अहङ्कारी भवति सः कदापि मोक्षाय अर्हः न भवति'' इति उक्तवान्।

एतद्वचनेन न केवलं कुमुदस्य सन्देहः अपगतः अपि तु तस्य अहङ्कारः अपि नष्टः। तदा आरभ्य कुमुदः निर्मलमनसा भगवन्तम् आराध्य मोक्षस्य पात्रः अभवत्।





# प्रपञ्चे चातुर्यम्

**पूर्वं** कदाचित् एकस्मिन् ग्रामे गोपीचन्दः नाम गृहस्थः निवसति स्म। तस्य पत्न्याः नाम चेतना आसीत्। तस्य चत्वारः पुत्राः आसन्। गृहे स्नुषाः अपि आगताः आसन्।

प्रापञ्चिक-कार्येषु कुशलिनी चेतना अनया चिन्तया व्याकुला आसीत् 'यत् तस्याः पश्चात् एतानि गृहदायित्वानि वोढुं चतसृषु स्नुषासु का वा समर्था भवेत्?'

एवं स्वपत्नीं चिन्तातुरां दृष्ट्वा गोपीचन्दः चतसृणामपि स्नुषानां परीक्षां कर्तुं निश्चयम् अकरोत्। सः प्रत्येकं स्नुषां क्रमशः आहूय ताभ्यः पञ्च-पञ्चगोधूमकणान् अयच्छत्। तथा च यावत् सः न प्रतियाचिष्यते तावत् सम्यक् रक्षितुम् अकथयत्। ज्येष्ठा स्नुषा अचिन्तयत्, 'गृहे गोधूमाः सर्वथैव भवन्ति। श्वशुरः यदा प्रतियाचिष्यते तदा पाकशालायाः गृहीत्वा दातुं शक्नुयाम्। एतान् गोधूमकणान् सुरक्षिततया निधातुं का आवश्यकता?' इति चिन्तयन्त्या तया श्वशुरात् प्राप्ताः गोधूमकणाः क्षिप्ताः।

द्वितीयया स्नुषया भोगवत्या अपि सुषमया इव चिन्तितम्। परं तया गोधूमाः न क्षिप्ताः उत खादिताः।

तृतीयया स्नुषया श्वशुरात् प्राप्ताः गोधूमकणाः एकस्यां मञ्जूषायां स्थापिताः।

चतुर्थ्या स्नुषया रोहिण्या इत्थं चिन्तितम् -'मम श्वशुरः न जाने कदा वा एतान् गोधूमकणान् प्रतियाचते। इमे गोधूमकणाः

पी.व्ही.आर्.मूर्ती



द्विधा एव सम्यक् निधातुं शक्यन्ते, एकं तु खादित्वा अथवा उप्त्वा। इमे पञ्च एव कणा: खादितुं तु न पर्याप्ता: अत: एतेषां रक्षणम् एव लाभाय कल्पेत। तदर्थं प्राप्ते ऋतौ एते वपनीया: एव। रोहिणी एवं चिन्तयित्वा तान् गोधूमकणान् स्वमातृगृहं प्रति अप्रेषयत्।

रोहिण्या: मातृगृहजनै: ते पञ्चकणा: उप्ता: ततश्च पञ्च शस्यानि निर्मितानि। तेषु सस्येषु वर्धितेषु सत्सु तेभ्य: धान्यं भिन्नीकृतम्। अग्रिमे वर्षे यदा तेषां गोधूमानां कृते न कोऽपि प्रार्थना आगता तदा सर्वम् अपि धान्यं पुन: उप्तम्। पुन: धान्यम् अर्जितम् एवं निरन्तरतया पञ्च वर्षाण्यतीतानि। अतीतेषु पञ्चसु वर्षेषु चेतना स्वस्वामिनम् अवदत्, ''प्राप्तवृद्धावस्था अहमधुना गृहदायित्वानि समर्थतया निर्वोढुम् असमर्था। भवता कथितम् आसीत् यत् कस्यै स्नुषायै दायित्वं दातव्यम् इति विचिन्त्य वदिष्यामि इति। पञ्चवर्षाणि निर्गतानि न्यूनातिन्यूनम् अधुना तु कोऽपि निर्णय: क्रियताम्।''

गोपीचन्द: सर्वा: अपि स्नुषा: गोधूमकणान् प्रत्ययाचत। सुषमाभोगावतीभ्यां पाकशालाया: एव गृहीत्वा पञ्च-पञ्च गोधूमकणा: दत्ता:। तृतीयया स्नुषया अपि स्वपेटिकाया: तले स्थापिता: गोधूमकणा: प्रगृह्य पुर: स्थापिता: ये अधुनायावत् कृष्णतां गता: आसन्।

गोपीचन्द: तान् कणान् पश्यन् अवदत्- 'नूनम् इमे मयैव दत्ता: कणा: सन्ति। सुषमया भोगवत्या च दत्ता: कणा: मया दत्ता: न सन्ति यत: एते हेमकान्ता: सन्ति। सत्यं कारणम् उच्यताम्'' एवं गोपीचन्देन पृष्टे सति अनन्यगतिकतया सुषमा-भोगावतीभ्यां सत्यं कथितम्।

गोपीचन्द: चतुर्थीं स्नुषाम् अपि अपृच्छत् ''भद्रे, त्वया मत् सकाशात् प्राप्ता: गोधूमकणा: कुत्र सन्ति?'' इति।

''तान् गोधूमकणान् अहं मातृगृहं प्रति अप्रेषयम्। तान् प्रतिप्राप्तुं अहं किञ्चित् समयम्

इच्छामि। दिनद्वयं दीयताम्' इति रोहिण्याः कथनं श्रुते सति गोपीचन्देन सहमती दर्शिता। दिनद्वये समाप्ते सति रोहिण्याः मातृगृहात् पञ्चाशत् शकटाः आगताः। तान् शकटान् दृष्ट्वा सर्वेषां बहु आश्चर्यमभवत्। पञ्च वर्षेभ्यः प्राक् दत्तेभ्यः तेभ्यः गोधूमकणेभ्यः पञ्चाशत् शकटपरिमितं धान्यं प्राप्तम् आसीत्।

गोपीचन्दः एतद्दृष्ट्वा पत्नीम् अवदत्, ''दृष्टं किल, कथं रोहिण्या धान्यकणाः रक्षिताः। रोहिण्यै एव गृहकार्याणां दायित्वानि दीयताम्। वस्तूनि कथं संरक्षणीयानि इति सा सुष्ठु जानाति।

''अन्यासां तिसृणां विषये किं चिन्तितम् अस्ति भवता? पत्न्या गोपीचन्दः पृष्टः। गोपीचन्दः अकथयत्, ''सुषमायाः निरुपयोगीनि वस्तूनि क्षेप्तुम् अभ्यासः अस्ति। अतः अवकरं निष्कास्य गृहस्वच्छतायाः दायित्वं सुषमायै यच्छ! भोगवत्याः गुणः अस्ति यत् तस्याः हस्ते यत् वस्तु आगच्छति तत् सा आस्वादयति अतः पाकशालायाम् अन्नपाचनदिकार्याणि तस्यै देहि।

रक्षिका प्रत्येकं वस्तुनः सम्यक् रक्षणं कर्तुं जानाति अतः गृहस्य कोषानां रक्षणनिमित्तं कुञ्चिकाः तस्यै दीयन्ताम्।

एवं कार्याणि सुष्ठुतया वितरामः चेत् गृहकार्याणि सुखेन पूर्णानि भविष्यन्ति प्रपञ्चः सुष्ठु प्रचलेत्''।

चेतनायै अपि गोपीचन्दस्य अयं निर्णयः अरोचत। इत्थमेव सा स्वस्नुसाषु सर्वाणि गृहकार्याणि व्यतरत्। सा स्वयं प्रापञ्चिक-कार्येभ्यः विश्रम्य रामनाम जपितुम् आरभत। अनन्तरं कामपि समस्यां चिन्तां वा विना चेतना स्वजीवनस्य अवशिष्टानि दिनानि व्यय्यकरोत्।






# पराजित:

अस्ति अवन्तिदेशे हेमचन्द्रो नाम कश्चन कवि:। प्रभूतधनधान्यवान् स: नित्यमेव नानाभोगान् भुङ्क्ते स्म। अथ कदाचित् महाकवे: कालिदासस्य दिगन्तं वितता कीर्ति: तस्यापि श्रुतिपथमायाता। राज्ञ: भोजस्य आस्थाने क्रियमाणं कालिदासस्य भूरिसम्माननम् अपि तस्य विदितमासीत्। तत्सर्वं ज्ञात्वा भुक्तभोग: सन्नपि आस्थानकविपदलालसाविष्ट: भूत्वा कालिदासं स्वकाव्यसामर्थ्येन पराजित्य तत्पदं बलात् स्वायत्तीकर्तुं स: मतिमकरोत्।

अनेन हेतुना प्रेरित: हेमचन्द्र: आन्दोलिकाम् आरुह्य कतिचनदासै: सह धारानगरम् अगच्छत् तत्र च कस्यांश्चित् धर्मशालायां न्यवसत्। कालिदासोऽपि एनां वार्ताम् अजानात्, यत् हेमचन्द्र: इत्याख्य: कश्चन कवि: तं पराजित्य आस्थाने तत्स्थानस्य आरोहणेच्छया अवन्तिदेशात् धारानगरीम् आगतोऽस्ति।

हेमचन्द्रस्य प्रतिभाबलं ज्ञातुं कालिदास: आन्दोलिकावाहकस्य वेशम् अधरत् तस्य शिबिकां वहत्सु च अन्यतमो भूत्वा अतिष्ठत्। तत: अचिरेणैव हेमचन्द्र: प्रस्थानार्थम् उद्युक्त: शालाया: बहिरागत्य शिबिकावाहकान् आह्वयत्। अन्यै: सह कालिदासोऽपि तत्र उपातिष्ठत्।

हेमचन्द्रे शिबिकायाम् उपविष्टे वाहका: ताम् उत्थाप्य प्रस्थिता:। शिबिकाया: अग्रिमदण्डं धृतवतो: अन्यतर: कालिदास: आसीत्। वाहकै: उह्यमाना शिबिका मार्गेण नीयते स्म। शिबिकावाहनं तु आस्थानकविना कालिदासेन कदापि न कृतम्। अत: अनभ्यासात् स: पीडित: सन् बाध्यमानात् स्कन्धात् स्कन्धं प्रति शिबिकादण्डं परिवर्तयति स्म। तद्दृष्ट्वा स्वकाव्यशक्तिविषये गर्वं वहता हेमचन्द्रेण श्लोकार्धेन छद्मवेशधारी कालिदास: पृष्ट:,

आर्.विश्वेश्वर शास्त्री

अयमान्दोलिकादण्डः स्कन्धं किं तव बाधति?

हेमचन्द्रेण स्वप्रश्ने कश्चन व्याकरणसम्बद्धः दोषः विहितः। 'बाधृ' इति आत्मनेपदिनमपि धातुं सः परस्मैपदिनं मत्वा असाधुप्रयोगम् अकरोत्। तच्छ्रुत्वा क्रुद्धेन कालिदासेन श्लोकार्धेनैव तस्य दोषं प्रकटयता उक्तम्, न तथा बाधते दण्डो यथा बाधति बाधते!

तदाकर्ण्य हेमचन्द्रः महदाश्चर्यम् अन्वभवत् स्वस्खलनं च अवागच्छत्। 'किं शिबिकावाहकोऽपि ईदृशं वैदुष्यम् अर्जयितुम् अर्हति?' इति विचिन्त्य सः शिबिकावेशधारिणं कालिदासम् अपृच्छत्, "रे किङ्कर, त्वया एतावदध्ययनं कुत्र कृतम्?"

"स्वामिन्, अहं कालिदासस्य शिबिकां वहामि स्म। सः यत् किञ्चिदपि तस्य शिष्यान् अध्यापयति स्म तस्मात् कश्चन अंशम् अहं शृणोमि स्म। अन्यथा अज्ञानी अहं व्याकरणं कथम् अज्ञास्यम्?" शिबिकावाहकस्य पात्रं नाटयन् कालिदासः छद्मतया हेमचन्द्रम् अब्रवीत्।

'यदि कालिदासस्य शिबिकावाहकोऽपि मम दोषान् दर्शयितुं समर्थः पण्डितः तर्हि कालिदासस्य विद्वत्तायाः किं मानं स्यात्?' इति विचिन्त्य हेमचन्द्रः कालिदासं द्रष्टुं गतः। हेमचन्द्रस्य गृहागमनं ज्ञात्वा कालिदासः भृत्यवेशेन स्वगृहस्य देहल्यां स्थितः। तत्रागतेन हेमचन्द्रेण पृष्टं, "अपि कालिदासः गृहे अस्ति?" भृत्यवेशेन स्थितेन शीघ्रकविना कालिदासेन झटित्युक्तम्,

नखलीनं खलीनं लीलया नमयन्नुन्नमयन्नवं हयं।

निरगादुरगारिरंहसा पुरगारुत्मतगोपुराद्बहिः॥

(कालिदासः नूतनम् अश्वम् आरुह्य तस्य खलीनं हस्ते धृत्वा तत् आकर्षन् शिथिलीकुर्वन् च गरुडवेगेन नगरद्वारात् बहिः अगच्छत्।)

'कालिदासस्य द्वारपालोऽपि यदि भाषाप्रभुः सामर्थ्यवान् कविश्च तर्हि अहं कालिदासं कथं वा पराजेतुं शक्नुयाम्?' इति विचिन्त्य आस्थानकविपदस्य लालसां त्यक्त्वा स्वयमेव पराजितो भूत्वा हेमचन्द्रः अनुक्षणम् अवन्तिदेशं प्रत्यागतः।





# यदा भवति भाग्योदयः

पुरा कोसलदेशे त्रीणि मित्राणि वसन्ति स्म। तेषु द्वे नन्दः सुनन्दः च धनिकौ आस्ताम्। किन्तु तृतीयः आनन्दः तु निर्धनः आसीत्। सः रज्जुनिर्माणकार्येण स्वोदरपूरणं करोति स्म। 'यथाकथञ्चिदपि आनन्दोऽपि धनिकः यथा भवेत् तथा किमपि कर्तव्यम्' इति नन्दसुनन्दाभ्यां सुनिश्चितम्।

''यदि किञ्चित्मात्रं वा मूलधनं भवति तर्हि तस्मात् इतोऽपि धनम् अर्जयित्वा कः अपि सधनः भवितुमर्हति। अतः यदि आनन्दाय किञ्चित् धनं दद्मः तर्हि तत् तस्य लाभाय भवेत्'' नन्दः अभणत्।

''किं वयं न पश्यामः यत् कदाचित् धनवन्तः अपि निर्धनाः भवन्ति इति? यदि दैवं सबलं तर्हि मूलधनं विना अपि जनाः कदाचित् सधनाः भवन्ति'' सुनन्दः स्वमतं प्रकटीकृतवान्।

स्वमतमेव योग्यमस्ति इति दर्शयितुम् अन्येद्युः नन्देन आनन्दाय द्विशत-सुवर्णमुद्राः दत्ताः। तत् धनं योजयित्वा व्यापारं कृत्वा इतोऽपि धनम् अर्जयितुम् आनन्दः उक्तः च। नन्देन दत्तासु सुवर्णमुद्रासु दशसुवर्णमुद्राः स्वव्ययार्थं पृथक् स्थापयित्वा व्यापाराय आवश्यकानि वस्तूनि क्रेतुम् आनन्दः अवशिष्टाः सुवर्णमुद्राः स्व-शिरस्त्राणे संयोज्य आपणं प्रति प्रस्थितः। दुर्दैववशात् कुतश्चित् एकः चिल्लः 'आनन्दस्य शिरस्त्राणे किमपि अस्ति' इति विज्ञाय तस्य शिरस्त्राणमेव चञ्चा धृत्वा नीतवान्। एवम् आनन्दस्य एकशतं नवतिः सुवर्णमुद्राः नष्टाः।

**बी.शिवनारायणः**

केभ्यश्चित् दिनेभ्य: अनन्तरं नन्दसुनन्दौ आनन्दस्य गृहमायातौ। तस्य आर्थिक-परिस्थितौ किमपि परिवर्तनम् अदृष्ट्वा ताभ्यां कारणं पृष्टम्।

''मया सर्वा: सुवर्णमुद्रा: मम शिरस्त्राणे स्थापिता: आसन्। किन्तु दुर्भाग्यवशात् केनचित् चिल्लेन तत् मम शिरस: नीतम्।'' आनन्द: गद्गद्स्वरेण उक्तवान्।

तस्य वचसि नन्द: विश्वासम् अकरोत्। किन्तु सुनन्द: विश्वासं नाकरोत्। स: साशङ्क: जात: यत् 'कदाचित् आनन्देन वृथा एव धनव्यय: कृत: स्यात्' इति। किन्तु नन्द: तु पुन: तस्मै द्विशतं सुवर्णमुद्रा: दत्त्वा असूचयत्, ''न्यूनातिन्यूनम् अधुना सावधानेन एतत् धनम् उपयुज्य धनार्जनं कुरु'' इति।

पुन: आनन्देन स्वव्ययार्थं यावत् आवश्यकं तावत् धनं पृथक् स्थापयित्वा अवशिष्टं धनम् एकस्यां तृणस्य पेटिकायां स्थापितम्। कानिचन आवश्यकानि वस्तूनि क्रेतुं स: आपणं प्रस्थित:। आपणात् प्रत्यागतेन आनन्देन गृहे सा पेटिका न दृष्टा। स: पत्नीम् अपृच्छत्।

''कश्चन लवणविक्रेता आगत: आसीत्। लवणं क्रेतुं गृहे धनं नासीत् अत: तां पेटिकां विक्रीय मया लवणं क्रीतम्'' भार्यया कृतं विवरणं श्रुत्वा आनन्द: पुनरपि दु:खित: जात:।



केषुचित् दिनेषु अतीतेषु पुन: नन्दसुनन्दौ तस्य गृहमागतौ एनं वृत्तान्तं श्रुतवन्तौ च। अधुना तु आनन्दस्य दुरवस्था इतोऽपि अवर्धत। तस्य वस्त्राणि अपि स्थाने स्थाने विदीर्णानि आसन्। ताभ्यां कारणं पृष्टे सति आनन्देन उत्तरितम्, ''मम गृहे वस्त्राणि सीवितुं सूचि: अपि नास्ति।''

सुनन्देन तस्य गृहगमनात् पूर्वमेव अन्यस्मै कार्याय सूचय: क्रीता: आसन्। तासु एकां सूचिं दत्त्वा स: आदन्दाय अकथयत्,''एनां सूचिं नीत्वा पत्न्यै कथयित्वा वस्त्राणि सम्यक् कारयतु भवान्'' इति। तत: सुनन्दनन्दौ निर्गतौ।

तस्यां रात्रावेव प्रतिवेशिनी धीवरपत्नी आनन्दस्य भार्याम् अपृच्छत्, ''अये भगिनी,

किं तव गृहात् एकां सूचिं प्राप्तुं शक्नोमि? श्वः प्रातः धीवराः जालानि स्वीकृत्य मत्स्यग्रहणार्थं गमिष्यान्ति। जालानि कुत्रचित् विदीर्णानि सन्ति। तानि सीवितव्यानि सन्ति मया। धीवरैः जाले यः प्रथमः मत्स्यः लभ्येत सः तुभ्यं प्रेषयामि''।

आनन्दस्य भार्या तस्यै सूचिं दत्तवती।

अनेद्युः सायङ्काले यदा धीवरः गृहं प्रत्यागतः तदा तेन एकः बृहदाकारः मत्स्यः पुत्रीद्वारा आनन्दस्य गृहे प्रेषितः। अन्नं पाचयितुं यदा आनन्दस्य भार्या तं मत्स्यं खण्डितवती तदा मत्स्योदरे काचमिव किञ्चन वस्तु दृष्टम्। अथैकदा तेन काचसदृशेन वस्तुना सह क्रीडन्तम् आनन्दस्य पुत्रं कश्चन सुवर्णकारः दृष्टवान्। सः आनन्दं पृष्टवानपि 'रे आनन्द, तद् काचसदृशं वस्तु मह्यं ददासि? तस्य कृते शतसुवर्णमुद्राः ददामि तुभ्यम्।'' तस्य प्रलोभनं श्रुत्वा आनन्दस्य मनः किञ्चित् साशङ्कं जातं यत्, 'प्रायः एतत् काचसदृशं वस्तु मूल्यवत् स्यात्' इति। अतः आनन्दः तस्य शतं सुवर्णमुद्राः नाङ्गीकृतवान्। तस्मिन् एव दिने महानगरं गत्वा सः तद् काचवस्तु अन्यस्मै सुवर्णकाराय दर्शितवान्।

सत्यमेव तत् काचसदृशं वस्तु बहुमूल्यवत् मौक्तिकमासीत्। एकः कश्चन धनिकः सुवर्णकारः विंशतिसहस्रं सुवर्णमुद्राभिः आनन्दात् तत् मौक्तिकं क्रीतवान्। तस्मात् धनात् एव आनन्देन भूमिः गृहं च क्रीतम्। रज्जुनिर्माणार्थं काष्ठयुतानि यन्त्राणि अपि कारितानि तेन। तस्य रज्जुनिर्माणकार्यं महत्या



गत्या वृद्धिङ्गतम्। अचिरात् सोऽपि धनिकः जातः।

यदा तस्य मित्राभ्यां नन्दसुनन्दाभ्याम् एतत् ज्ञातं यत् 'आनन्दः आकस्मिकं सधनः जातः अस्ति' तदा तेन सह मेलितुं तौ आगतौ।

"किं भोः! मया दत्तेन मूलधनेनैव भवान् धनवान् जातः ननु?" नन्दः पृष्टवान्।

आनन्दः प्रारम्भात् अन्तपर्यन्तं यथा घटितं तत् सर्वं श्रावितवान्।

"दृष्टं किल! केवलं सुदैवादेव मया दत्तायाः सूच्याः साहाय्येन आनन्दः कथं धनवान् जातः!" सुनन्दः अभणत्।

अधुना नन्दः आनन्दस्य वचसि विश्वासं नाकरोत्। सः चिन्तितवान् यत्, 'वस्तुतः आनन्दः मया दत्तेन मूलधनेनैव सधनः जातः अस्ति किन्तु एतत् सत्यं सः गोपयितुम् इच्छति'। त्रीणि अपि मित्राणि आनन्दस्य कृषिक्षेत्रं द्रष्टुं निर्गतानि। यदा ते पृष्ठतः गतवन्तः तदा तैः दृष्टं यत् आनन्दस्य पुत्रेण पुत्र्या च वृक्षात् एकं नीडम् अधः पातितमस्ति। तस्मिन् नीडे तैः आनन्दस्य शिरस्त्राणं लब्धम्। शिरस्त्राणस्य एकस्मिन् कोणे च एकशतं नवतिः सुवर्णमुद्राः बद्धाः दृष्टाः।

अनन्तरं ते त्रयः यत्र वृषभाः बद्धाः आसन् तत्र सम्प्राप्ताः। तस्मिन्नेव समये एकः सेवकः एकां तृणपेटिकां क्रीत्वा तत्र आनीय स्थापितवान्। यदा पेटिकातः वृषभैः खादयितुं तेन तृणम् उद्धृतं तदा काश्चनः सुवर्णमुद्राः तस्य हस्ते लग्नाः। एताः तु ताः एव एकशतं नवतिः सुवर्णमुद्राः आसन् याः दुर्भाग्यवशात् आनन्देन नाशिताः आसन्।

"यदा सुदिनानि आयान्ति तदा एका लघ्वी सूचिः अपि सौभाग्यस्य कारणं भवितुमर्हति" एतस्य सुनन्दस्य वचनेन नन्दः अपि सहमतः जातः।





# कृषिक: एव राजा

कालीचरण: सामान्य: कृषिक:। स: स्वपितु: सम्प्राप्ते दश-एकरमिते क्षेत्रे कृषिं करोति स्म। तस्य पुत्रा: तु ग्रामात् नगरं गन्तुं कालीचरणस्य निर्बन्धं कुर्वन्ति स्म। नगरे उत्तमशिक्षाव्यवस्था भवतीति तेषां चिन्तनम्। कालीचरणस्य पत्नी रेश्मा अपि पुत्राणां वचनानि समर्थयति।

कालीचरणस्तु स्ववृत्तिं त्यक्तुं न इच्छति, पुत्राणां वचनानि तिरस्कर्तुमपि न शक्नोति। किं कर्तव्यमिति निर्णेतुं स: बहु कष्टमनुभवति स्म। अन्ततो तेन चिन्तितं यत् अस्मिन् विषय बाल्यमित्रस्य विनायकस्य सूचना स्वीकर्तव्या इति। विनायकस्य सूचना अस्मिन् सन्दर्भे सहकरोति इति कालीचरण: विश्वसिति। यतो हि विनायक: अपि कृषिक: एव।

कालीचरण: विनायकस्य गृहं वीक्ष्य तं पृष्टवान् यत् ''किं भवत: गृहजना: सर्वे कुत्र गतवन्त:? किं ते बन्धुगृहं गतवन्तो वा?''

विनायाक: ''ते सर्वे अध्ययनार्थं नगरे बसन्ति'' इति प्रत्यवदत्।

''भवत: पुत्रा: पठितुं गता:, किन्तु भवत: पत्नी कुत्र गतवती?'' इति कालीचरण: पृष्टवान्।

''पुत्राणां पालनार्थं ताम् अहमेव तै: सह प्रेषितवान्। अहं तु एकाकी बसामि।''

''हा.. अस्तु। अहं तु भवत: उपदेशं श्रोतुम् अगतवान्। किन्तु अत्र वास्तवं किमिति ज्ञातं मया। किम् एकाकिना कृषि: कर्तुं शक्यते?'' इति पुन: अपृच्छत् कालीचरण:।

सर्वं ज्ञातवान् इव विनायक: एकवारं

बी.व्ही.पटनायक

हसित्वा "किं भवतः पुत्राः पठनार्थं नगरं गन्तुं निर्बन्धं कुर्वन्ति?" इति पृष्टवान्।

"सत्यम्। ते कृषिकर्मणि मम कष्टानि अपि प्रदर्शयन्ति। कदाचित् समये बीजानि न प्राप्यन्ते। श्रमिकाणां न्यूनतादिकारणैः क्षेत्रकर्षणे, बीजवपनादि कार्येषु नितरां कष्टमनुभूयते।

सुखेन जीवितुं कृषिकार्यस्य अपेक्षया उत्तमजीविका प्राप्तव्या इति ते चिन्तयन्ति। अस्मिन् विषये भवतः उपदेशं प्राप्तुम् आगतवान् अहम्" उक्तवान् कालीचरणः।

"अध्ययनम् अस्मभ्यम् आवश्यकमेव, किन्तु यदि वयं कृषिकार्यं परित्यजामः चेत् अस्माकं भाविजीवनं चिन्ताकुलं भविष्यति। अत एव अहं मम पुत्रान् पठितुं नगरं प्रेषितवान्। कृषिकार्यार्थम् अत्रैव वसामि इति तेभ्यः कथितं मया।"

तौ एवं भाषमाणौ आस्ताम्, तावदेव विनायकस्य प्रतिवेशी राजारामः तत्र आगतः। "विनायाकमहोदय! कृषिकस्य जीवनं बहुविधकष्टयुक्तम्। गतवर्षे अहं कृषेरनन्तरं यदा उत्पत्तिं विक्रीतवान्, तदा मम ऋणं प्रत्यर्पयितुं पर्याप्तधनमपि न प्राप्तवान् अहम्।

अस्मिन् वर्षे उत्तममूल्यार्थं निरीक्षे। एतावत् पर्यन्तं न प्राप्तवान्। अस्माकं कष्टानि न केनापि परिलक्ष्यन्ते। अस्माभिः उत्पादितानि खादित्वा जीवन्ति, तथापि



अस्माकं कष्टानि न परिगणयन्ति। राजा अपि अस्मासु निम्नदृष्टिमेव स्थापयति" इति राजारामःअवदत्।

"तिष्ठतु राजाराम! अस्माकं जीवने शुभदिनानि आयान्ति। वयम् अस्माकं धैर्यं न परित्यजेम। अस्माकं परिश्रमान् विना जगत् खादितुं तृणमपि न प्राप्नोति" इति विनायकः राजारामम् अनुनेतुं।

"मित्र! सम्प्रति मम सम्पत्तिं पूर्णां विक्रेष्यामि चेदपि किमपि धनं नावशिष्यते मत्सविधे। तत्र किं कारणम्? अत एव अहं चिन्तयामि यत् मम क्षेत्रं सम्पूर्णं विक्रीय नगरं प्रति गमिष्यामि। अन्यद् किमपि कार्यं कृत्वा जीविकां सम्पाद्य कालं यापयमि"



इति राजाराम: स्वमन: आविष्कृतवान्।

''तद् अनुचितम्। राज्ञ:, प्रजाजनानां च उपरि कोपात् निराशया च भूमिविक्रयणम् इति उपाय: न योग्य:। तदपेक्षया भवत: उत्पत्ते: अपेक्षितमूल्यं प्राप्तुं भवान् प्रयतताम्। भवत: पृष्ठत: वयं भवाम:। धैर्यं मा त्यज'' इति विनायक: राजारामाय धैर्यं प्रादातुं।

''मित्र! अधुना समाज: कृषिं निम्नदृष्ट्या पश्यति। एतदपि उत्तमजीवनस्य साधनमिति विस्मृतवन्त: जना:।

कृषिकार्ये नैके क्लेशा: दरीदृश्यन्ते। तत्र मम पुत्राणां चिन्तनं सत्यम् इति प्रतिभाति मे। एकदा वीर: उक्तवान् आसीत् यत् विवाहाय स्वपुत्राय कन्या न लभ्यते इति कारणं ते कृषिका: प्रदर्शयन्ति'' इति कालीचरण: अवदत्।

विनायक: तत्सर्वं श्रुत्वा बहु कष्टमनुभूतवान्। स: तत्समाधातुम् उपायं चिन्तयितुमारब्धवान्।

''मित्राणि! यदि सहनक्षमता अस्ति तर्हि वयं कामपि समस्यां समाधातुं शक्नुम:। अस्माकं समस्या: समाधातुं मम समीपे एक: उपाय: वर्तते। तत्र भवतां सहकार: आवश्यक:। तन्निमित्तं भवन्त: सर्वे मया सह चलेयु:। प्रत्येकं कृषिकेण सह भाषणीयम्'' इत्युक्त्वा विनायक: स्व-उपायं श्रावितवान्। तदर्थं सर्वे स्वसम्मतिं प्रकटितवन्त: अपि।

योजनानुगुणं सर्वे स्व स्व कार्याणि परित्यज्य विनायकेन सह पदयात्रायां भागग्राहिण: अभवन्। ते प्रत्येकं कृषिकेण सह वर्तालापं कृतवन्त:।

दिनानि अतीतानि, वर्षाकाल: आगत:। सर्वे स्व-स्व कार्यमारब्धवन्त:। षण्मासानन्तरं सर्वे स्व-स्व उत्पत्तिं सङ्गृहीतवन्त:। राजा वार्षिकसस्योत्पत्तिविषये पृष्टवान्।

तदा राजोद्योगिन: प्रतिनिवेदितवन्त: यत् 'तीव्ररूपेण सस्योत्पत्ति: न्यूना जाता' इति। राजा भवितव्यां आपदृस्थितिम् अभिज्ञातवान्।

स: सर्वान् कृषिकान् आहूय तै: सह समावेशम् अकल्पयत्। उद्वेगेन तान् अपृच्छत् यत् ''किमर्थं भवन्त: अस्मिन् वर्षे भवतां

शक्त्यनुगुणं कृषिकार्यं न कुर्वन्ति?'' इति

''वयम् अस्माकं कृते पर्याप्ताहारं लभ्यते वा न वा तथापि जनानां निमित्तं सस्योत्पादनं एव वयं जानीमः। भवान् कृषिक्षेत्रं विहाय अन्यानि क्षेत्राणि प्रोत्साहयति। अत एव प्रजाः अपि कृषिकं, कृषिक्षेत्रम् अल्पदृष्ट्या पश्यन्ति।

तदस्माकं जीवनम् अत्यन्तं प्रभावयति। अस्माकं पुत्राणां विवाहाः अपि न भवन्ति अधुना। यदा अस्माकं स्थानं वा गणनं वा न क्रियते तदा परेभ्यः किमर्थं वयं कार्यं कुर्मः?

अस्माकम् आवश्यकतां ज्ञापयितुं वयं चिन्तितवन्तः। अत एव अस्माकं परिवाराय पर्याप्तधान्यस्य निष्पत्तिं कर्तुं वयं निश्चितवन्तः'' इति विनायकः विवृतवान्।

राजा आश्चर्यम् अनुभूतवान्। ''कृषिकस्य जीवनं कियति सङ्कटे वर्तते इति अहम् ज्ञातवान्। कृषिकार्ये नियतप्राप्तये अहमेकं शासनमानयामि, तथैव युवजनान् कृषिक्षेत्रे प्रवेष्टुं च प्रोत्साहयामि। कृषिकः स्वनिष्पत्तिं स्वयं यथा विक्रेतुं शक्नुयुः तथा अहं व्यवस्थां च कल्पयमि। अधुना आरभ्य कृषिकः एव राजा भवति'' इति राजा उद्घोषितवान्।

सर्वे कृषिकाः 'विनायकस्य योजना फलिता' इति तम् अभिनन्दितवन्तः। अपि च स्वविजयस्य कारणं परस्परसहयोगः धैर्यं चास्ति इति ज्ञातवन्तः।

यद्यपि अस्मद्राष्ट्रस्य अर्थकारणे मेरुदण्डायते कृषिः तथापि यथार्थरूपेण न आद्रियते सा अर्थव्यवस्थायाम्। आन्ध्रप्रदेशे समुद्रतटवासिनः कृषिकाः एकस्मिन् वर्षे निषेधरुपेण ऋतौ कृषिकार्यम् एव न कृतवन्तः यतः ते प्रभूतं कष्टम् अनुभूतवन्तः यथा बीजानां रसायनानां च अनुपलब्धिः, असमानं वितरणं महार्हता, हस्तक्षेपः इत्याददयः।

अतः पीडितैः तैः कृषिकैः एकीभूय एकं वर्षं यावत् अनुत्पादनस्य निर्णयः कृतः। यद्यपि अनन्तरं सर्वकारेण तैः सह चर्चा कृता तथापि ऋतुचक्रं तु नष्टम् एव। अनेन प्रसङ्गेन जातायाः चिन्तायाः इयं कथा उद्भूता।



# प्रत्यक्षप्रमाणम्

एकदा कथाप्रसङ्गे ग्रामस्था: सर्वे एकस्य ग्रामीणस्य विषये चर्चाम् अकुर्वन्। बहुभि: तस्य गुणानां प्रशंसा कृता। अन्तत: एक: जन: अवदत्,''स: उत्तम: जन: इत्यत्र नास्ति सन्देह: परन्तु तस्मिन् द्वौ दोषौ वर्तेते'' इति। अपर: अपृच्छत्-''कौ तौ द्वौ दोषौ?''

''स: शीघ्रकोपी, तथा कोपावेशे स: कार्याकार्यविवेकं न रक्षति''।

संयोगवशात् यस्य विषये ते वार्तालापं कुर्वन्त: आसन् स: एव तत्र आगत: अन्तिमं वाक्यं च श्रुतवान्।

स्वस्य आलोचकस्य उपरि उत्पत्य स: ग्रीवया तं गृह्णन् अपृच्छत्, ''अरे शठ। किं ते धार्ष्ट्यं, मां 'शीघ्रकोपी' इति वदसि? तव कण्ठनोदनमेव करोमि।

उपस्थिता: अन्ये जना: तस्य रक्षणार्थं प्रयतमाना: अवदन्,''भवान् स्वयमेव प्रमाणीकृतवान् यत् तस्य आलोचना न मिथ्या''।



# मुखपृष्ठकथा



डिसेम्बर् २०११ मासस्य सञ्चिकाया: मुखपृष्ठे भवद्भि: दृश्यमानं सुन्दरं, वर्णयुतं, रोमहर्षकं च चित्रमिदं 'युलिसीसस्य प्रवासवार्ता:' इत्येतस्यां मालिकायां प्रसिद्धम् अभवत्। भवतां सर्वेषां प्रेमपात्रेण श्रीमता चित्रामहोदयेन आलिखितम् एतत् चित्रम्।

पूर्वतनकाले पत्रिकासज्जीकरणे सङ्गणकस्य उपयोग: न भवति स्म। तदानीमपि चित्रे कथानुगुणं गाम्भीर्यं निर्मातुं, कथानायकेन युलिसीसेन च अनुभूयमानम् अमानवीयम् आकर्षणं, तेन च सम्मुखीक्रियमाणां विपदं प्रदर्शयितुं चित्रलेखकेन चित्रे प्रयुक्ता: नीलरक्तवर्णच्छटा: केषां मनांसि न मोहयन्ति? चित्रस्य कथायाश्च कश्चन दृढ: अन्योन्यसम्बन्ध: वर्तते। यथा शशिना निशा निशया च शशी तद्वदेव एतेन चित्रेण युलिसीसकथा कथया च चित्रं विभाति। उभावपि समेत्य पत्रिकाया: सौन्दर्यं तनुत: इति पृथक्कथनं नापेक्ष्यते।

१९५७ तमात् वर्षात् आरभ्य १९५८ तमं वर्षं यावत् एषा कथामालिका चन्दमामायां प्रकाशिता अभवत्।

'आकारयन्ति सायरन्-अप्सरस:' इति शीर्षकात्मकस्य चित्रस्य मूलं ग्रीकपुराणकथासु वर्तते। गृहजनानां स्मरणेन व्याकुलस्य युलिसीसस्य 'सर्सी' इत्यभिधाना अप्सरा: अनिच्छया गृहगमनम् अन्वमन्यत। सर्सी युलिसीसे अनुरक्ता आसीत् तं च भृशम् आद्रियते स्म। तेनैव विशेषानुरागेण सा युलिसीसाय मार्गे विद्यमानानाम् आपदां विषये कथयति। सायरन्-अप्सरस: तासु एव अन्यतमा:। अतिमानुषीयोन्यां जन्म प्राप्तवत्य: एता: अप्सरस: प्राणभयकारिण्य: आसन्। स्वगायनेन ता: जनं तासां द्वीपं प्रति आकर्षयन्ति स्म। तासां गानं श्रुत्वा कोऽपि जन: आत्मसंयमने अशक्तो भूत्वा तद्द्वीपे अवतरति स्म, यत: प्रत्यागन्तुं स: सुतरां न शक्नोति स्म। कथं युलिसीस: आत्मानं सहनाविकान् च ताभ्य: अरक्षत् इत्येतत् वर्णयति एतेन चित्रेण सुशोभिता सा कथा।

अथ कदाचित् कथाप्रसङ्गे अस्मद्गणीय: कश्चन अवदत्,एतासाम् अप्सरसाम् अस्माकं जीवने विद्यमानेन असता सह तुलना सुशक्या। सत्यमेव उक्तं तेन, यत् 'दुर्व्यसनानि अस्मज्जीवनम् अभिधावन्ति, अस्मान् ध्येयपथ: च भ्रंशयन्ति। अस्माकं मन: मोहयन्ति। अस्माभि: सततमेव ताभि: सह सङ्घर्षरतै: भवितव्यम्।' स: सङ्घर्षस्तु व्यक्त्यनुगुणं पृथक् भवति।

भवन्त: एनां कलाकृतिं सानन्दम् आस्वादितवन्त: स्यु: इति आशासे। अपरेण अविस्मरणीयेन मुखपृष्ठेन जनवरीमासे वर्षस्य शुभारम्भ: भवेत् इति प्रतिशृणोमि।

***- सौम्या भारद्वाज***

# सार्थः कोषः

पुरा काञ्चीपेटग्रामे कबीरदासः नाम एकः शिक्षकः आसीत्। एकस्मिन् दिने सः स्वविद्यार्थिनां विचारधारां परीक्षितुमैच्छत्। सः तान् सचिटिकान् त्रीन् पेटकान् अदर्शयत्। एकस्योपरि 'अन्नम्' अन्यस्योपरि 'धनार्जनम्', अपरस्योपरि च 'शिक्षणम्' इति लिखितम् आसीत्। सः प्रतिछात्रं कस्माचिदपि पेटकात् एकां चिटिकां स्वीकर्तुमकथयत्। तैः अपि छात्रैः पेटकाः परिवृताः, प्रत्येकं छात्रः च एकां चिटिकां प्राप्तवान्। तदनन्तरं सः गुरुः तान् विद्यार्थिनः चिटिकानुसारं समूहरचनां कर्तुमब्रवीत्। बहवः छात्राः अन्नचिटिकासमूहे आसन्। द्वितीये गणे 'धनार्जनम्' वृतवन्तः विद्यार्थिनः आसन्। केवलम् एकः छात्रः 'शिक्षण' चिटिकासमूहे आसीत्। तस्य नाम मेधांशुः आसीत्।

कबीरदासमहोदयः मेधांशुं शिक्षणवरणस्य कारणं पृष्टवान्। सः स्वगुरुं सादरं प्रणम्य अवदत्-''अहं शिक्षणं वृतवान्, यतः अहं शिक्षणं प्राप्स्यामि, तत्सहायेन धनार्जनं करिष्यामि, तेन अन्नं प्राप्तुं शक्ष्यामि।''

कबीरदासमहोदयः मेधांशोः उत्तरेण सन्तुष्टः। सोऽन्यान् छात्रान् उपादिशत्-''तीव्रेच्छया विना शिक्षाग्रहणं व्यर्थम्। भवन्तः अत्र शिक्षाग्रहणार्थम् आगताः, ततः भवद्भिः शिक्षणाय सर्वोच्चं महत्त्वं दातव्यम्। तदनुसृत्य अन्यानि वस्तूनि स्वयमेव प्राप्यन्ते। शक्तिमति सति एव उद्योगं कर्तुं शक्यम्। भवद्भिः अर्जितं ज्ञानं तु आजन्म भवद्भिः सह निवसिष्यति। अतः, शिक्षणमेव ननु सार्थः कोषः।''

***- मल्लारेड्डी मुरली मोहन***





# शिथिलालय: - २१

*(जाङ्गल: इत्याख्याम् इभ्यज्ञातियुवकं मार्गदर्शकरूपेण स्वीकृत्य शिखिमुखी कामाख्यानगरात् ब्रह्मपुत्रनदप्रदेशं प्रातिष्ठत। वने अजगर: कश्चन जाङ्गलम् आक्रामत्। शिखिमुखी तं चाहनत्। अजगरस्य हननं दृष्ट्वा वामाचारिण: तम् अभ्यद्रुवन्। तत: अग्रे...)*

**आ**क्रामत: वामाचारिण: विलोक्य 'मम मरणमिदानीं निश्चितम्' इति शिखिमुखिन: चिन्ता समुत्पन्ना। तेन स्वपितृमुखात् वामाचारिणां क्रूरताम् उदाहरन्ती: नैका: कथा: श्रुता: आसन्। सहसैव सञ्जातम् आक्रमणं तस्य भयम् अजनयत्। परं तत: पलायनं वा दयायाचनां वा तस्य अवमाननमिव प्रत्यैयत। 'यदि मरणमेव निश्चितं चेत् आपदं सम्मुखीकृत्य एतै: दुष्टै: युध्यमानस्य मम मृत्यु: श्रेयान्' इति स: अचिन्तयत्। स: शत्रुं वृथैव नन्तुं नैच्छत्।

इति सर्वम् आलोच्य शिखिमुखी असिकोशात् खड्गं निष्कास्य उच्चै: आदिशत्, "विक्रमकेसरिन्, त्वं तव शरीररक्षकै: सह इत: पलायस्व। वामाचारिणां चमू: माम् आक्रमति। मम रक्षणार्थं तव अनुचराणां प्राणहानि: सर्वथा न युज्यते। शीघ्रं पलायध्वम्!"

इत्थं भाषमाणस्य शिखिमुखिन: वामाचारिषु अन्यतम: शूलेन तं प्राहरत्। शिखिमुखिना आत्मानं संरक्ष्य खड्गेन तस्य

दासरि सुब्रह्मण्यम्



कण्ठे प्रहारः कृतः। 'हे महाकाल!' इति गर्जन् सः वामाचारी वर्मणि जाते प्रहारे छिन्नमूलवृक्षः इव भूमौ पतितः। तावदेव अन्यः कश्चन उच्चैः आक्रोश्य अवदत्, ''तिष्ठत!! तं मा जहि! सः तु अस्मद्गुरोः नाम उच्चारयति।''

तावत् इतोऽपि पञ्चषाः वामाचारिणः तत्र आगताः। शिखिमुखिनः आदेशानुगुणं अजितः वीरभद्रः विक्रमकेसरी च पलायनम् अकृत्वा खड्गं धृत्वा शिखिमुखिनः रक्षणार्थम् आयाताः। कश्चन वामाचारी स्वानुचरान् अवरुध्य शिखिमुखिनः सम्मुखम् आगम्य अवदत्, ''अस्मान् वामाचारिणः रोद्धुं युष्माकं खड्गाः कुन्ताः वा अशक्ताः। नाहं युष्मत् भीत्वा मम अनुचरान् अरुणधम्। अहं तथा अकरवम् यतो हि त्वम् अस्मद्गुरोः नामोच्चारणं कृत्वा तम् इतः पलायितुम् अवदः। एतत् बहु विचित्रं भात्यस्माकम्। कस्त्वम्? कुत्रास्ति अस्माकं गुरुः विक्रमकेसरी?'' इति वामाचारिणः वचनात् शिखिमुखी सर्वामपि परिस्थितिम् अजानत्। सः तालपत्रेषु पठितवान् आसीत्, यत् महाराजः विक्रमकेसरी वामाचारिणां प्रदेशे बहुकालं यावत् न्यवसत्। अतः 'नामसाधर्म्येण एते मम सहचरं विक्रमकेसरिणं महाराजं विक्रमकेसरिणं भावयन्ति' इति सः अवागच्छत्।

तावदेव विक्रमकेसरिणि शिखिमुखिनः समीपम् आगते वामाचारिणे तं दर्शयित्वा सः अवदत्, ''एषः एव विक्रमकेसरी। एतस्य पितामहः महाराजः विक्रमकेसरी कतिचनवर्षेभ्यः पूर्वम् एनं प्रदेशम् आगच्छत्। किन्तु ततः परं कुत्रचित् लुप्तस्य तस्य कुशलमपि ज्ञातुं न अशक्नुम वयम्। तमेव अन्वेष्टुं शूरसेनदेशात् अत्रागताः वयम्।''

यस्मै शिखिमुखी एतत् अकथयत्, सः तु वामाचारिणां दलस्य नेता आसीत्। शिखिमुखिनः भाषणं श्रुत्वा सः तस्य शूलं भूमौ अक्षिपत्, विक्रमकेसरिणः समीपं गत्वा तं प्राणमत् अवदच्च, ''तव मुखं गुरोः विक्रमकेसरिणः मुखमिव भाति। सः अस्मभ्यम् आपत्सु योग्यं मन्त्रम् अयच्छत्, अस्मासु

रोगग्रस्तेषु सत्सु रोगनाशार्थं औषधी: दत्त्वा स: अस्मान् उपाकरोत्। तेन उपकृता: वयं कदापि अनृणं न प्राप्नुम:। परं ... ''इति वदन् स: एकदृष्ट्या शिखिमुखिनं वीक्ष्य अवदत्, ''परम् एतस्य वचनम् अहं नावगच्छामि। अस्मद्गुरु: विक्रमकेसरी अद्यापि जीवति इत्यत्र यूयं कथं विश्वसथ? यदि स: अद्यापि अजीविष्यत् चेत् युष्मद्देशं प्रत्यागमिष्यत्।'' ''महाराज: विक्रमकेसरी जीवति इति काचन किंवदन्ती अस्माभि: श्रुता। यानि तालपत्राणि वयं प्राप्तवन्त:, तेभ्य: वयम् ऊहां कृतवन्त:, यत् स: ब्रह्मपुत्रनदप्रदेशस्थं शिथिलालयम् अगच्छत्। तत: परं च तद्विषये न किमपि ज्ञायते'' शिखिमुखी प्रत्युदातरत्।

''न ते चिन्तनम् अयुक्तम्। अस्माभि: बहुधा बोधिते सत्यपि गुरु: विक्रमकेसरी इभ्यजातीयानां प्रदेशम् अगच्छत्। तदनन्तरं वयमपि तद्विषये न किञ्चिदपि जानीम:। इभ्या: तम् अघ्नन् इति वयं न चिन्तयाम:। परन्तु केनचित् भयङ्करेण रोगेण ग्रस्त: स: मरणं प्राप्तवान् स्यात् इत्यस्माकं मति:'' वामाचारिनेता अब्रवीत्।

''तदेव सत्यं ज्ञातुं वयमत्र आयाता:। परं न तु केवलं सोऽर्चक:, अपि तु यूयं वामाचारिण: अपि अस्माकं गवेषणे बाधा: उत्पादयथ इत्यहं मन्ये'' शिखिमुखी अगदत्।



तन्निशम्य वामाचारिणां नेता ईषद् हसित्वा अवदत्, ''नास्मज्जातीया: युष्मान् पीडयेयु:। पीडानिवारणार्थं चिह्नरूपेण एकां रुद्राक्षमालां तव कफोण्यां बध्नामि। तथापि युष्माभि: सावधानै: भवितव्यम्। युष्माकं गृहं प्रतिगमनात् प्राक् अस्मिन् महारण्ये अस्माकं मेलनं कुत्रचित् पुनरपि भवेदेव। मम नाम घोरचित्त: अस्ति'' इत्युक्त्वा स: शिखिमुखिन: हस्ते रुद्राक्षमालाम् अबध्नात्। तत: तम् आपृच्छ्य घोरचित्त: आत्मन: व्रणितं किङ्करम् अनुचरै: उत्थाप्य तत: निरगच्छत्।

शिखिमुखी जाङ्गलं हस्ते गृहीत्वा चलितुं तस्य साहाय्यं कुर्वन् तं वृक्षम् आगच्छत्, यत्र ते रात्रिं यापयितुम् इच्छन्ति स्म।



अजितवीरभद्रौ पाकसिद्धतायां रतौ। शिखिमुखी विक्रमकेसरिणं किञ्चित् दूरं नीत्वा तस्मै अकथयत्, ''अजगरेण कृतस्य जाङ्गलस्य आक्रमणात् पूर्वं मया गुल्मेभ्य: कस्यस्वित् भाषणं श्रुतम्। तेन मम सन्देह: जायते।''

''एवं सति आवां जाङ्गलत: सत्यं ज्ञातुं शक्नुव: किल?'' विक्रमकेसरी अवदत्। ''परं यदि स: आवां वञ्चयित्वा गुल्मेषु स्थितेन केनचित् सम्भाषणं कृतवान् स्यात् तर्हि तस्मात् आवां सत्यं ज्ञातुं न शक्नुव:। प्राय: यदा वायु: वाति तदा तेन चलितानां पर्णानां शाखानां वा कारणात् तथा ध्वनि: श्रूयते यथा जनद्वयं सम्भाषणं करोतीव। अत: मया श्रवणे स्खलितं स्यात्। किन्तु यत् किमपि भवतु, अस्माभि: तु सावधानै: भवितव्यम्'' शिखिमुखी अब्रवीत्।

पाकसिद्धतायां जातायां सर्वे अभुञ्जन्। तावता जाङ्गलेनापि स्वयमेव विना साहाय्यं चलितुं सामर्थ्यं प्राप्तम्। वृक्षमूले एकं दूष्यं निर्माय शिखिमुखी विक्रमकेसरी च तस्मिन् सुप्तौ। अजित: वीरभद्रश्च अश्वेभ्य: खाद्यम् अयच्छताम्। ततश्च दूष्यं परित: अग्निसेकान् अज्वालयताम्। तावत् रात्रे: प्रथमप्रहार: अतीत:। अत: उर्वरितेषु त्रिषु प्रहरेषु प्रत्येकस्मिन् प्रहरे एकेन जाग्रता सावधानमनसा परिरक्षणं विधातव्यमिति ताभ्यां निश्चितम्।

जागरणस्य परिरक्षणस्य च प्रथमपर्याय: अजितस्य आसीत्। अग्नि: अखण्डतया प्रज्वलित: तिष्ठतु इत्यनया धिया तदा तदा स: शुष्ककाष्ठानि अग्निसेकेषु स्थापयति स्म। कस्यस्वित् हिंस्रपशो: शत्रो: वा आक्रमणं समये एव रोद्धुम् अनिमेषदृष्ट्या स: अन्धकारेऽपि परित: पश्यन् आसीत्। द्वितीय: प्रहर: अपि विना कामपि दुर्घटनाम् अतीत:। वने दूरात् व्याघ्रशृगालादीनां गर्जनम् अजितस्य श्रुतिपथम् आयाति स्म। कदाचित् सहसा शीष्कारसदृशो ध्वनिरपि तेन श्रुत:। वंशवृन्दे प्रवहता वायुना निर्मितोऽयं ध्वनि: स्यात् इति तेन चिन्तितम्।

अजितस्य पर्याये समाप्ते जाते जाङ्गल:

परिरक्षणकार्यं वोढुम् आरभत। अजित: वीरभद्रात् अनतिदूरं गत्वा भूमौ सुप्त:। परं स: निद्रां न गत:। वामाचारिणाम् आक्रमणम् अनुभूतवन्तं तं 'वनेऽस्मिन् कदापि विपत् अस्मासु आपतेत्' इति भयं बाधते स्म। अत: स: निद्रावशं न गन्तुं प्रयतते स्म।

कश्चन समय: बीत:। सहसा अजितस्य नेत्रपटले अत्यन्तनिद्रया निमिलिते। तस्मिन्नेव क्षणे दूरं कस्यस्वित् हिंस्रपशो: शब्द: श्रुत:। स: नेत्रे उन्मील्य अपश्यत्। अग्निसेकानां निकटमेव स्थित: जाङ्गल: एकदृष्ट्या समीपस्थं गुल्मं पश्यति स्म। अग्निसेके शुष्ककाष्ठानि न स्थापितानि, येन अग्नि: प्राय: उपशान्त: आसीत्।

कर्तव्यच्युत्यर्थम् अजित: जाङ्गलं तर्जयितुम् ऐच्छत्। तावदेव तेन गुल्मेभ्य: शीष्कार: श्रुत:। अनुक्षणं जाङ्गल: कुन्तं स्कन्धे निधाय अध: उपविष्ट:। सञ्जायमानां विपदम् ऊहित्वा अजित: शिखिविक्रमयो: पटमण्डपस्य दिशि अपश्यत्। तत्र तेन यद् दृष्टं तत्कारणात् तस्य शरीरं सहसा महद्भीत्या अवेपत।

कश्चन चित्रक: दूश्याभ्याशे स्थित: आसीत्। स: स्वशिर: दूश्ये अन्त: सारयन् आसीत्। आपदम् पूर्वमेव ऊहितुं शक्तस्य रक्तशुनकस्य अस्मिन् समये अनुपस्थित्या अजित: आश्चर्यम् अन्वभवत्। आपदम् चिन्तयत: तस्य शरीरे धैर्यं समचरत्। कश्चन आत्मरक्षणोपाय: तस्य मनसि स्फुरित:।



“उत्तिष्ठ वीरभद्र! आपदापतति!” इति वदन् सः उत्थाय चित्रकं लक्ष्यीकृत्य कुन्तम् अक्षिपत्। कुन्तेन चित्रकस्य वक्षः विद्धम्। पीडाक्रान्तः सः दारुणरवेण आक्रोशत्। वेदनां वोढुम् अशक्तः सः कथञ्चित् उत्तिष्ठन् पुनरपि पतन् वनं पलायितुं प्रयतते स्म।

अजितस्य आक्रोशं चित्रकस्य गर्जनं च श्रुत्वा शिखिमुखी विक्रमकेसरी च जागृतिं प्राप्य खड्गहस्तौ भूत्वा पटमण्डपात् धावन्तौ बहिरायाताम्। जाङ्गलं पलायनात् रोद्धुं वीरभद्रम् आदिश्य अजितः शिखिविक्रमयोः निकटं गत्वा सर्वमपि घटितं सङ्क्षेपेण ताभ्याम् अकथयत्, “एभ्यः गुल्मेभ्यः मया शीष्कारः श्रुतः। तेष्वेव गुल्मेषु शत्रुः गुप्तरूपेण तिष्ठतीति शङ्के।”

तदाकर्ण्य सपद्येव विक्रमकेसरी चापं गृहीत्वा त्रीन् शरान् गुल्मे अमुञ्चत। तृतीये शरे गुल्मे लग्ने वेदनाजः करुणरवः श्रुतः। अनुक्षणं गुल्मः अवेपत। ततः काचन कृष्णाकृतिः पलायमाना दृष्टिपथमायाता।

शिखिमुखी अजितम् अब्रवीत्, “अस्याम् अस्पष्टज्योत्स्नायां तस्य अनुसरणं प्राणभयकारकं स्यात्। अस्माकं शत्रवः अत्र समीप एव गुप्ताः स्युः। अतः युवयोः अन्यतरः जाङ्गलं पश्यतु अपरश्च अस्माकं साहित्यस्य रक्षणं करोतु। अहं विक्रमेण सह व्रणितं चित्रकं द्रष्टुं गच्छामि। सकृत् प्रहृत्य व्रणितस्य



हिंस्रपशोः अहत्वैव त्यागः भविष्यति काले कष्टं जनयेत्।

शिखिमुखिविक्रमकेसरिणौ चित्रकस्य समीपं गन्तुम् उद्युक्तौ। तदा अजितः अवदत्, “स्वामिन्, अस्याम् आपदि अपि अस्माकं रक्तशुनकः कथं मौनम् आश्रित्य स्थितः? सः नैव भषत्यपि। अहं तु आश्चर्यम् अनुभवामि। नितराम् असाधारणं वर्तनमेतस्य।”

“कश्चन... न! एषः जाङ्गलः एव तं निःसंज्ञकारकं किमपि अन्नं भोजितवान् स्यात्। तव आक्रोशे श्रुते एव अहं तं संस्पृश्य जागरयितुम् ऐच्छम्। परं सः निःसंज्ञः सन् भूमौ पतितोऽस्ति। ...भवतु! तत् अनन्तरं पश्यामः” शिखिमुखी अवदत्।

ज्वलत्काष्ठं हस्ते गृहीत्वा शिखिमुखी विक्रमकेसरी च चित्रकस्य समीपम् आगतौ। सहसा गर्जन् चित्रकः तयोः उत्पतितुम् ऐच्छत्। किन्तु व्रणितस्य विद्धवक्षसः तस्य कुन्तेन उत्थानम् अशक्यम् आसीत्। तथापि सप्रयत्नं कूर्दिते तस्मिन् कुन्तः तस्य वक्षसि इतोऽपि अन्तः न्यस्तः। तेन सः अधः पतित्वा आत्यन्तिकवेदनया अवेपत।

शिखिमुखी कुन्तेन चित्रकस्य मस्तके द्वित्रिवारं प्राहरत्, तस्य उरसि न्यस्तं कुन्तं बहिः आकर्षत्। ततः किञ्चित्कालं यावत् वेपित्वा चित्रकः मरणं प्राप्नोत्।

''शिखिन्! अपि दृष्टं त्वयैतत्?'' इति वदन् विक्रमकेसरी स्वकुन्तं चित्रकस्य कण्ठे स्थापितवान्। तस्य कण्ठे कश्चन चर्मपट्टः बद्धः आसीत्।

''एषः मनुष्याधीनः चित्रकः अस्ति। तस्य स्वामी गुल्मे गुप्तरूपेण स्थितः आसीत्। सः एव चित्रकम् अस्मान् आक्रान्तुं प्रेरितवान्। तव बाणेन विद्धः सः। आगच्छ, तमपि पश्यावः'' इति वदन् शिखिमुखी अग्रे असरत् विक्रमकेसरी च तमन्वसरत्।

प्राणभयेण कम्पमानं जाङ्गलं प्रति यदा शिखिमुखी अगच्छत् तदा सः प्रणमन् तस्य पादयोः अपतत्। शिखिमुखी तं ग्रीवायां धृत्वा उत्थापितवान् तेन च हस्ते ज्वलत्काष्ठं धारयित्वा सक्रोधम् अब्रवीत्,''तव दण्डनं क्षमां वा पश्चात् निश्चिनुमः। प्रथमं तावत् बाणेन विद्धं तव मित्रं दर्शय अस्मभ्यम्। अग्रे सर! यदि पलायितुं प्रयतसे चेत् तव पृष्ठे कुन्तं निवेशयामि!''

आपादमस्तकं कम्पमानः जाङ्गलः गुल्मान् प्रति असरत्। तमनु शिखिमुखी विक्रमकेसरी चाचलताम्। ***(अनुवर्तिष्यते)***





# सामर्थ्यम्

**आ**सीत् मालवानाम्न: देशस्य जयसिंहभूपति: युद्धनीति-निपुण:। अत: एव तेन प्राप्त: 'रणधीर:' इति उपाधि: सर्वथा उपपन्न:।

प्रतिवर्षं राज्ये नवरात्रोत्सवं जना: राजा च महता उत्साहेन सम्पादयन्ति स्म। उत्सवेऽस्मिन् पञ्चवर्षेषु सकृत् योद्धृषु विद्वज्जनेषु च स्पर्धा: भवन्ति स्म। न केवलं तद्राज्यस्य अपि तु समीपस्थस्य राज्यस्य जना: अपि नैकासु प्रतियोगितासु भागं वहन्ति स्म। तासु विजयिन: नृपेण यथार्थत: सम्मानिता: भवन्ति स्म। विजयिन: मालवानिवासिन: स्व-स्वयोग्यतानुगुणम् उद्योगं प्राप्नुवन्ति स्म।

अथैकदा तासु विजयिषु सेनाध्यक्षरुपेण सेनापतिरुपेण च द्वयो: निपुणयो: वरणं आवश्यकम् आसीत्। नृप: जयसिंह: स्पर्धाम् उत्कटतया निरीक्षते स्म। निजनैपुण्येन द्वौ युवकौ महीपते: चित्तम् अहरताम्। परन्तु कस्मिन् पदे क: उचित: इति निर्णेतुं राजा असमर्थ:। अत: स: प्रधानमन्त्रिणा सह मन्त्रणाम् अकरोत्। यत: प्रधानमन्त्री अस्मिन् विषये चतुर: अवर्तत।

तत: प्रधानमन्त्री द्वावपि तरुणौ मेलनार्थम् आह्वयत्। एकस्य अभिधानं जयचन्द्र: द्वितीयस्य तु विशाल:। प्रधान: ताभ्याम् अधिकारपदस्य विषये किमपि नाकथयत्। स: द्वावपि उद्दिश्य अवदत्,"अस्माकं भूप: प्रत्येकस्मै समानं किञ्चित् कृषिक्षेत्रं दास्यति। भवद्भ्यां कृषिकार्यस्य आरम्भ: करणीय:। एकवर्षात् अनन्तरम् आगत्य पुन: स्पर्धायां

साई प्रशान्ति



भवद्भ्यां स्वकौशल्यं दर्शयितव्यम् इति नृपस्य इच्छा अस्ति।''

जयचन्द्रः विशालः च नृपस्य समयम् अन्वमन्येतां प्रधानमन्त्रिणे धन्यवादान् च अयच्छताम्।

स्पर्धासु उत्तमजनाः विजयीजनाः च योग्यकार्यभारं लभन्ते इति तु सर्वैः विदितम्। किन्तु एतं नूतनपारितोषिकं श्रुत्वा सर्वे निवासिनः चकिताः अभवन्।

'एषैव प्रधानमन्त्रिणा रचिता परीक्षा भवितुम् अर्हति' इति जयचन्द्रस्य चतुरा पत्नी ज्ञातवती। अतः सा विचक्षणा भर्तारम् ''अवधानेन कृषिकार्यमपि करोतु'' इति उपादिशत्। भार्यायाः वचनानुसारेण जयचन्द्रः कृषिकार्यं कुर्वन् युद्धकौशल्यस्य अभ्यासमपि अकरोत्।

तत्र विशालः अचिन्तयत्, 'कृषिभूमिः तु मह्यं नृपेण पारितोषिकरुपेण दत्ता अस्ति' इति। अतः सः स्वयं कृषिकार्यम् अकृत्वा काश्चन् जनान् आहूय तान् एव कृषिकार्ये योजयति स्म। सः तु पूर्ववत् केवलं युद्धकौशलस्यैव अभ्यासं करोति स्म।

अत्रान्तरे प्रधानमन्त्रिणः सूचनानुसारं केचन् जनाः तयोः द्वयोः अपि कार्यस्य निरीक्षणम् अकुर्वन् मन्त्रिणे च अकथयन्। अतः प्रधानमन्त्रिणा द्वयोः कार्यम् अवगतम्।

एवं संवत्सरः अतीतः। अतः पुनः स्पर्धा अभवत्। तदा विशालेन सरलतया जयचन्द्रः पराभूतः।

ततः प्रधानमन्त्री द्वावपि कृषि-उत्पन्नविषये पृष्टवान्। जयचन्देण कथितं, ''मया तु द्विशतस्यूतपूर्णानि सस्यानि प्राप्तानि।'' केन प्रकारेण सः कृषिकार्यम् अकरोत्, कृषिकार्ये काः काः समस्याः तेन सम्मुखीकृताः इत्यपि सः सविस्तरम् अकथयत् प्रधानमन्त्रिणे।

विशालः अकथयत् ''मया कृषिकार्ये अवधानं न दत्तम्। अहं तु एकाग्रमनसा युद्धाभ्यासमेव कृतवान्। अतः अहं केवलं पञ्चाशत्स्यूतपूर्णानि सस्यानि मम क्षेत्रात् प्राप्तवान्।''

तदनन्तरं भूपतिना सह चर्चां कुर्वन्

प्रधानमन्त्री तम् असूचयत् यत् ''जयचन्द्रः सेनाध्यक्षः भवितुम् अर्हति विशालः तु सेना-आज्ञापकः।'' तामेव सूचनाम् अङ्गीकृत्य जयसिंहः नृपः तथैव उदघोषयत्।

अनन्तरं प्रधानम् उपरोक्तनिर्णयस्य विषये नृपे पृष्टे सति प्रधानः नम्रतया अकथयत्, ''आदरणीय महाराज, सेनाध्यक्षस्य पदभारं ग्रहितुं कः समर्थः? यः स्वयमेव नियुक्तकर्मणि व्यग्रः भवति; यः कार्यं कुर्वन् अनुभवजन्यज्ञानेन जनान् निर्देष्टुमपि शक्नोति, यः स्वयमेव युद्धकौशले, व्यूहरचनाविद्यायां निर्णयं करिष्यति, सः एव सेनाध्यक्षरुपेण सफलीभविष्यति। नैकेषु कार्येषु युगपत् नैपुण्यं यः प्रकृत्या दर्शयति सः एव नेता भवितुम् अर्हति। जयचन्दं एते सर्वे गुणाः आश्रयन्ति। अतः जयचन्द्रः यशस्वी सेनाध्यक्षः भविष्यति इति मन्ये।

परन्तु विशालस्य अपि अङ्गीभूतं सामर्थ्यं लघुतरं नास्ति। संग्रामे-शस्त्रविद्यायां-व्यूहरचनायां यस्य उत्कटेच्छा अस्ति, तथा च स्वविद्यां परिपूर्णतां नेतुं यः सदैव प्रयत्नान् करोति सः एव उत्तमः सेनापतिः। अतः विशालः उचितः सेनापतिः भविष्यति इत्यत्र नास्ति कोऽपि सन्देहः।

प्रथमायाः स्पर्धायाः अन्ते मया या भूमिः द्वाभ्यामपि दत्ता सा केवलं पारितोषिकत्वेन न, अपि तु द्वावपि परीक्षितुम्। एवमेव कुशाग्रा बुद्धिः तथा च चातुर्यं सेनाध्यक्षस्य सेनापतेः च कृते अतीव महत्त्वपूर्णे इति मम अभिप्रायः। यदि मम चिन्तने कोऽपि दोषः स्यात् तर्हि क्षम्यताम्'' इति।

राजा जयसिंहः प्रधानमन्त्रिणं प्राशंसत् अवदत् च,''नैव नैव। भवतः निरीक्षणेन, चिन्तनेन च अहम् अतीव प्रसन्नः।''





# सत्परिवर्तनम्

**आ**नन्दः षष्ठ्यां कक्ष्यायां पठन्नासीत्। तस्मै अध्ययनस्य अपेक्षया क्रीडैवाधिकं रोचते स्म। तस्य माता अन्नपूर्णा तं पुनः पुनः वदति स्म 'अध्ययने एकचित्तः भव' इति। परं सः तत्र अवधानं न यच्छति स्म। तस्मै क्रिकेट्-क्रीडा बहु रोचते स्म। यदा यदा दूरदर्शने क्रिकेट्-क्रीडायाः साक्षात् प्रसारणं भवति स्म तदा तदा सः बुभुक्षां विस्मरति स्म, शालां न गच्छति स्म, केवलं गृहे उपविश्य साक्षात् प्रसारणं पश्यति स्म। यथा तस्य नेत्रे दूरदर्शने एव अवसक्ते स्तः।

तस्य पिता नागेशः तस्य त्रैमासिक-परीक्षायाः निर्णयमपश्यन्। तत् दृष्ट्वा सोऽतीव खिन्नः जातः तस्मै अक्रुध्यत् च। तथापि आनन्दे न किमपि परिवर्तनं जातम्। नागेशः तस्य वर्गशिक्षकेण गणपतिना सहावदत्। अध्यापकः गणपतिरवोचत्, ''आर्य नागेश, चिन्तां मा कुरु। बहवः बालकाः एषु दिनेषु एवमाचरन्ति। अहं तस्मिन् सत्परिवर्तनम् आनेतुमधिकाधिकं प्रयते''।

तदनन्तरं सः छात्रेभ्योऽगदत्,''शृणुत प्रियाः छात्राः, ये छात्राः अस्मिन् षाण्मासिक-परीक्षायामुत्तीर्णाः न भवेयुः ते वार्षिकीं परीक्षां दातुमनर्हाः भवेयुः। तादृशाः छात्राः अग्रिमे वर्षेऽपि सप्तमकक्ष्याप्रवेशस्य अपेक्षया षष्ठकक्षायामेव उपविशेयुः''।

सर्वे छात्राः तच्छ्रुत्वा भीताः अभवन्। ते सर्वेऽपि शालाध्ययनं गम्भीरतया अकुर्वन्। तेऽचिन्तयन् 'यदि अग्रिमे वर्षेऽपि ते षष्ठकक्षायामेव उपविशन्ति तर्हि तदतीव लज्जास्पदं भवेत्'।

ते सर्वे शालोद्याने वृक्षस्य अधः उपविश्य

अदूरी हैमवती

मिलित्वा अध्ययनमारभन्त। आनन्दोऽपि तैः सह उपविशति स्म। परं तस्य बुद्धौ न किमपि प्रविशति स्म।

पूर्वतनाः पाठाः पठिताः नासन् तेन इदानीं पाठिताः पाठाः अपि तेन नावगम्यन्ते स्म। सः कथञ्चित् उत्तीर्णः भवितुम् अन्यान्यमार्गान् अन्वेष्टुं प्रारभत। इदानीं षाण्मासिक-परीक्षायाः पूर्वतना त्रैमासिकी परीक्षासीत्।

तस्य सहाध्यायिनी इन्दुः आनन्दस्य समीपम् उपविष्टासीत्। इन्दोः एवं पद्धतिः आसीत् यत् सा उत्तरलिखिताम् उत्तरपत्रिकां पार्श्वे स्थापयति स्म तथा च अवशिष्टम् उर्वरिते कर्गजे लिखति स्म।

प्रतिवारं, यदा सा उत्तरं समाप्य पार्श्वे स्थापयति स्म आनन्दः तमवसरं लब्ध्वा ततः सर्वाणि उत्तराणि अनुलिखति स्म।

आनन्दः एवं प्रकारेण सर्वासु परीक्षासु वञ्चितवान्। सः सर्वासु परीक्षासु सामान्यतया प्राप्तेषु गुणेषु अधिकैः गुणैः उत्तीर्णः जातः। तस्याध्यापकः गणपतिः तथैव पितरौ अपि तस्य फलितांशं दृष्ट्वा चकिताः। तस्य निर्धारं दृष्ट्वा ते आनन्दम् अभिनन्दितवन्तः।

सः सर्वं वर्गं संबोध्य अवदत्, ''प्रियाः छात्राः, युष्माभिः सर्वैः आनन्दात् प्रेरणा स्वीकर्तव्या। सः निर्धारं कृत्वा भृशमभ्यस्तवान्। तेन सः परीक्षायाम् उत्तमान् गुणान् प्राप्तुं शक्तवान्। एवं वृत्तिः आवश्यकी'' इत्युक्त्वा सः सर्वस्मै वर्गाय



तस्य कृते करताडनं कर्तुं प्रोदसाहयत्। तं सः पृष्ठे प्रेम्णा ताडितवानपि।

तस्य माता तस्य कृते प्रकामं भल्लातकैः तण्डुलस्य पायसं कृतवती तं प्रेम्णा भोजितवती च। तस्य पिता तस्य कृते नूतनं युतकं आनीतवान्। आनन्दः ज्ञातवान् यदि सः परीक्षायाम् उत्तमान् गुणान् लभते तर्हि सर्वे तं स्तुवन्ति तस्मै पारितोषिकं च यच्छन्ति। परं गाढः अभ्यासः न तावान् सुलभः। अतः सः निश्चितवान् यत् 'अग्रिमपरीक्षायामपि एवमेव वञ्चनां कृत्वैव उत्तमान् अङ्कान् प्राप्स्यामि' इति।

षाण्मासिक-परीक्षायामपि सः इन्दोः उत्तरपत्रिकायाः उत्तराणि एव अनुलिखितवान्।



तस्य वर्गशिक्षकः अस्मिन् समये तदवलक्षितवान्। अतः सः आङ्ग्लभाषायाः वार्षिक-परीक्षायाम् इन्दुम् आनन्दात् दूरमुपवेशितवान्। आनन्दाय तस्मिन् दिने वञ्चयितुम् अवसरः एव न लब्धः। तेन सः तस्मिन् दिने किमपि लेखितुमसमर्थः जातः। तस्य शिक्षकः गणपतिः तं दुःखयितुं न इच्छति स्म। आनन्दस्य अयोग्यात् मार्गात् प्रत्यागमनमेव तस्य लक्ष्यम्। तदेव मनसि निधाय परीक्षासमाप्तेः उत्सवार्थं सः सर्वान् छात्रान् क्रीडाङ्गणं नीतवान्।

सर्वे छात्राः आवल्यामुपस्थिताः। सर्वान् छात्रान् संबोध्य सः उक्तवान्, ''प्रियच्छात्राः, अध्ययनं भवतु क्रीडा वा भवतु, अस्माभिः एकचिताः भूत्वा निश्चयेन अभ्यासः करणीयः। अस्माभिः अस्मासु स्थितः अलसः त्यक्तव्यः।

अलसः अस्माकं प्रथमः शत्रुः। अस्माभिः तस्य पराजयं कृत्वा समयस्य योग्यः उपयोगः कर्तव्यः। अस्माभिः अस्माकम् उद्दिष्टपूर्त्यर्थं महत्कष्टं सोढव्यम्। क्रिकेट्क्रीडा भवतु, बुद्धिबलक्रीडा भवतु, लक्ष्यवेधक्रीडा भवतु अथवा भारतीय-प्रशासकीय-सेवा-परीक्षा वा भवतु, वयं तदा एव यशस्विनः भवामः यदा अस्माकं पुरतः किमपि लक्ष्यं स्यात्। तथा च तस्य प्राप्त्यर्थं वयं कष्टान् सहामहे। अस्थिरं मनः स्थिरं कथं कर्तव्यं तदस्माकं हस्तेऽस्ति।

अस्माकं शालोद्याने स्थितानि एतानि पुष्पगुल्मानि शाकगुल्मानि च पश्यत। अस्माभिः विविधेभ्यः वर्गेभ्यः निश्चितकालः दत्तोऽस्ति तथा च तत् कार्यम् अस्मासु एव विभक्तमस्ति।

वयं नियोजनं कृत्वा अस्माकं शालोद्यानं रक्षामः। अतः वयमद्य रमणीयं शालोद्यानम् उपभोक्तुं शक्नुमः।

अस्माभिः पुष्पगुल्मानां कृते केदारः निर्मितः अस्ति। वयं नियमेन तेभ्यः जलवितरणं कुर्मः। अस्माकं निरन्तरप्रयत्नैः उद्यानं विविधवर्णपुष्पैः सुशोभितं दृश्यते। रक्तफलम्, वृन्ताकः, भेण्डिका एते गुल्माः बहु-भरेण समृद्धाः शोभन्ते।

एताः शाकलताः पश्यत। शाकसुशोभिताः जालाः कोशातक- कारवेल्ल-परवल- आदिशाकैः आधारीभूतजालेभ्यः अवलम्बन्ते। एतान् परवलान् सावधानं पश्यत। यदा ते लघु भवन्ति

तदा वयं तेषां एकस्मिन् अन्ते पाषाणं बध्नामः।

किम् जानीथ यूयं किमर्थमिति ?'' केचन छात्राः तस्य उत्तरं दातुं प्रायतन्त। तेऽचिन्तयन् 'परवलाः दृश्यन्ताम् अतः पाषाणबन्धनं कुर्वन्ति। अन्यथा ते पर्णेषु न दृश्येरन् यतः पर्णानि अपि तद्वर्णानि एव भवन्ति'। अनन्तरम् अध्यापकः गणपतिः स्वयमेव उत्तरं दत्तवान्। सोऽवदत्, ''परवलाः अस्माकं मनः इव भवन्ति।

यदि वयं तस्य एकम् अन्तं पाषाणेन न बध्नीमः तर्हि तानि वक्रानि भवेयुः। पाषाणबन्धनेन परवलाः सरलाः संवर्धन्ते।

तदैव तेषां योग्यं विक्रयणं भवेत्। यथा परवलाः सरलाः भवन्तु अतः वयं पाषाणबन्धनं कुर्मः तथैव अस्माकं लक्ष्यं तस्य पाषाणस्य कार्यमेव करोति येन अस्माकं मनः सरलं भवेत्। अस्माभिः कालापव्ययः कदापि न करणीयः।

अस्माभिः अस्माकं मनः सदैव सुयोग्ये मार्गे स्थापनीयं यशस्वी च भवितव्यम्। अद्य सचिनतेण्डुलकरः गोपीचन्दः एतादृशैः क्रीडापटुभिः यशस्वी भवितुं सोढानां श्रमाणां मूल्यमवगच्छत।

अस्माकं मनः अयोग्यविषयान् प्रति शीघ्रमाकर्षितं भवति। अस्माभिः लक्ष्यस्य भारेण तत् सर्वदा योग्ये मार्गे स्थापनीयम्। अधुना पादकन्दुक-क्रीडां क्रीडत, गच्छत''।

यदा शालासमाप्तेः घण्टानादः अभवत् तदा सर्वे छात्राः स्वस्यूतमुन्नीय गृहं प्रस्थिताः। आनन्दः गणपति-आचार्येण मेलितुं तस्य चरणस्पर्शं च कर्तुं शिक्षक-कक्षं गतः। सोऽवदत्, ''आचार्य, क्षम्यताम्। मया अपराधः कृतः'' इति वदन् सः उच्चैः रोदनमारब्धवान्। तस्य अध्यापकः तमुन्नीतवान् तस्य मस्तकं प्रेम्णा लालयन् अवोचत्, ''प्रिय आनन्द, त्वयि सत्परिवर्तनं भवतु तदर्थं मया कृतः एषः प्रयत्नः आसीत्। गच्छ, मनः पाषाणबद्धं कृत्वा योग्यां दिशं प्रतिष्ठस्व। शुभास्ते पन्थानः सन्तु''।



# सहाय्यार्थं हस्त:

एकदा श्रीनाथपुरं नाम्नि ग्रामे सदानन्द: नाम एक: धनिक: भूस्वामी निवसति स्म। निर्धना: सर्वदा तं प्रति आगम्य वित्तं वा तेषां कृते उपयोगि किमपि वस्तु स्वीकृत्य गच्छन्ति स्म।

एकदा कैश्चित जनै: अस्य भूस्वामिन: पुरत: सारनाथ नाम्न: कस्यचित् जनस्य स्तुति: कृता। तै: उक्तम्, ''भो: भद्र! सारनाथ: यदि न अभविष्यत् तर्हि वयमपि न अभविष्याम। सोऽपि भवादृश एव अतीव दयालु: अस्ति। सारनाथं स्तुन्वद्भ्य: तेभ्य: स: भूस्वामी अत्यन्तम् अक्रुध्यत्।

'रे मूढा: युष्माकं सर्वा: अपि आवश्यकता: परिपूर्य युष्मान् आश्वस्तान् कुर्वन्नहमेव अस्मि। तथापि यूयं सारनाथस्य एव किमर्थं स्तुतिं कुरुथ?

भूस्वामिन: मन्त्रिणा एतच्छ्रुतम्। तस्याम् एव सन्ध्यायां स: भूस्वामिनं तत्स्थलम् अनयत् यत्र एते दरिद्रा: जना: वसन्ति स्म। तै: तत्र बहून् श्रमान् कुर्वन् सारनाथ: दृष्ट:। तेन परिधृतानि वस्त्राणि अत्यन्तं मलिनानि आसन्। व्रणितौ हस्तौ एकेन वस्त्रेण आवृतौ आस्ताम्। हस्तेन कार्यं कुर्वन् स: क्षतिग्रस्त: सञ्जात: स्यात् इति भासते स्म।

स: मन्त्री भूस्वामिनम् अवदत्,''भवान् यान् जनान् सहाय्यं करोति स्म तान् एव जनान् सारनाथ: अपि सहाय्यं करोति। परम् अस्मिन् सहाय्ये तेन स्वमन: अर्पिततम् आसीत्। स: मनसा सहाय्यं करोति इति भवता लक्षितम् स्यादेव। तेन प्राप्यमाणस्य आदरस्य एतदेव कारणं स्यात्।''

एतत् श्रुते सति स: भूस्वामी अपि आत्मानं सारनाथस्य प्रशंसाकरणात् रोद्धुं नाशक्नोत्। तेन स्वबुद्ध्या दरिद्रान् सहाय्यं कुर्वत: सारनाथस्य सहकारशीलतायै अपि प्रोत्साहनं दातुम् आरब्धम्।

*- भीमवरपु पुरुषोत्तम*



# कोऽहं भविष्यामि ?

**ग**तेषु केषुचित् वर्षेषु न्यायवादिनाम् प्रतिमा जनमानसे परिवर्तिता दृश्यते। अत: एव बहव: युवान: अद्य एतं व्यवसायं कामयन्ते। अद्यत्वे सर्वा: एव संस्था: निर्बाधतया कार्यं कर्तुं न्यायव्यावसायिकं कमपि कामयन्ते एव। अत: अयं व्यवसायसङ्घ: सर्वान् अपि प्रोत्साहयति।



**अस्मिन् व्यवसायसङ्घे अन्तर्हितौ भवत:।**

- न्यायवादी (Lawyer)
- संस्था-सचिव:

विध्यनुसारं किं कर्तुम् उचितं किं च प्रतिषिद्धम् इति ज्ञातुं जना: संस्था: च विविधान् न्यायवादिन: निमन्त्रयन्ति। क्वचित् न्यायलयेषु अन्यजनै:, संस्थाभि: सर्वकारेण वा सङ्घर्षे सति जना: स्वमतवादार्थं न्यानवादिन: निमन्त्रयन्ति। व्यवसायनिष्ठा, अभ्यास:, संशोधनं, तितिक्षा निरलसता इत्येते गुणा: न्यायव्यवसाये अपेक्षिता:। कथं तर्हि कश्चन विधिज्ञ: (Lawyer) भवेत् ?

विधिज्ञ: भवितुं प्रथम: सोपान: चतुर्वर्षीय: पदवी-अभ्यासक्रम: एल्.एल्.बी. (L.L.B) इति स्नातकपदवी। लेखनकौशल्यं विभाजनकौशल्यं तथा च सूक्ष्मविचारशक्ति: इति विधिज्ञस्य आवश्यका: गुणा:। ग्रन्थेषु अन्यत्र वा न्यायसम्मततत्त्वान् अन्वेष्टु स: समर्थ: भवेत्। तथा च तानि तत्त्वानि सुस्पष्टतया अन्येभ्य: निवेदयितुं तस्य वाक्कौशलं लेखनकौशलं च अपेक्षितम्। न्यायशालायां प्रवेशार्थं प्रत्येकं जनेन (LSAT) (Law school Admission Test ) इति प्रवेशपरीक्षा पारं करणीया।





जनानां तर्कशक्तिं, लेखनकौशल्यं विभाजनकौशल्यं ,आकलनकौशल्यं परीक्षितुम् इयं परीक्षा स्वीक्रीयते। द्वितीय: सोपान: नाम (BCI) (Bar Concil of India) द्वारा स्वीकृता द्वितीया परीक्षा। अनया परीक्षया स्नातक: न्यायवादी भवितुं योग्य: न वा इति परीक्ष्यते। विशिष्टविषयेषु न्यायाभ्यासं ये कर्तुम् इच्छामि तै: बिभिन्नबिधिमण्डलै: आयोजिता: परीक्षा: दातव्या: भवान्ति।

अयि मित्राणि! विधिज्ञ-व्यवसायविषये एतावत्पर्यन्तम् अस्माभि: चर्चा कृता। व्यवसायरूपेण 'कंपनी-सेक्रेटरी' इति पदस्य विषये अग्रिमे मासे चर्चां कुर्म:।

**- *साई***

# चन्दमामीया सामान्यज्ञानपरीक्षा - ३५

*(ऊनषोडशवर्षीयाणां कृते)*

***Co-sponsored by Infosys FOUNDATION, Bangalore***

**समुचितोत्तरदाता अर्हति ₹२५०/- पारितोषिकत्वेन***

***एकाधिकजना: यदि शुद्धम् उत्तरं प्रेषयेयु:, तर्हि प्रतिजनं ₹५०/- दास्यन्ते पारितोषिकत्वेन।**

**अधोक्तं क्रियतां भवद्भि:-**

१. उत्तराणि समपत्रे लेखनीयानि।

२. नाम, वय: सङ्केत: (पिन् कोड्सहित:) प्रेषणीय:।

३. पिहितपत्रे **चन्दमामीया सामान्यज्ञानपरीक्षा - ३५** इति लेखनीयम्।

४. ३१ जनवरी पूर्वं भवदुत्तराणि अस्माभि: प्राप्तानि भवेयु: तथा तानि प्रेषणीयानि।

५. २०१२ तमवर्षस्य मार्चमासीये अङ्के परिणाम: प्रकाशयिष्यते।

## साधूनां विषये सर्वम्



१. कस्य ऋषे: समीपे दिव्या गौ: कामधेनु:, तस्या: सुता नन्दिनी च आस्ताम्?

२. सप्तर्षिषु क: द्रोणाचार्याय ब्रह्मास्त्रं ददौ?

३. दुर्वासस: पिता क:?

४. क: ऋषि: सव्यङ्गै: अष्टभि: अङ्गै: सहित: अजायत?

५. 'प्राचीनभारतीय-वैद्यकशास्त्रस्य जनक:' इति क: उच्यते?

६. क: पूर्वाश्रमे राजा सन् उग्रया तपश्चर्यया राजर्षि: जात:?

### चन्दमामीया सामान्यज्ञानपरीक्षा - ३२ सितम्बर २०११ उत्तरम्

१) २७ सप्टेम्बर २) पेरूदेश: ३) जम्मूकाश्मीरप्रदेशौ ४) चारमिनार
५) गोवा ६) केरला ७) जयपुरम् ८) मसूरी

*September'11 Winners: 1. Shakshi Satish Naik, AMBAD. M.I.D.C, Near Simbaji's College Nashik.*
*2. Gongati Devika, D/o Chinna polireddy, Mundlamuru(Mandal), Prakasam(dist) - 523265.*
*3. Durai A Navaneetham, C-252 Kandasamy salai, Periyar Nagar, Chennai - 600082.*
*4. Krishnankith Banerjee, Swarg Ashram, Paraniandh Chok Gate, Delhi - 110009.*
*5. Ananya Srivastava, D/o A.C. Srivastava, H.D. 89, Sector - I, Janakipuram, Lucknow-226021.*



# हस्यताम् उदरोपपीडम्



हस्यताम् उदरोपपीडम्

*भ्राता* - मम तीव्रा शिरोवेदना अस्ति।

*भगिनी* - जानामि अहं किमर्थमिति।

*भ्राता* - किमर्थम्।

*भगिनी* - ह्यः यदा मम उदरवेदना आसीत् तदा माता उक्तवती रिक्तत्वात् वेदना स्यादिति। भवतः शिरोवेदनायाः अपि तदेव कारणं स्यात्।



*शिक्षिका* - यदि अहं भवते द्वौ मार्जारौ चतुरः कुक्कुरान् च दद्याम् तर्हि भवतः समीपे कति प्राणिनः स्युः?

*सोमु* - आचार्ये! नव?

*शिक्षिक:* - कथं नव?

*सोनु* - मत्सविधे पूर्ववर्तिनः कच्छपं , शशकं, शुकं च इत्येतान् प्राणिनः न गणितवती एव भवती।



*अरुणः* - किं जानासि कस्याः राज्ञ्याः बृहत्तमः मुकुटः?

*वरुणः* - अथ किम्। जानामि एव।

*अरुणः* - तर्हि वदतु, कस्याः?

*वरुणः* - यस्याः राज्ञ्याः खलु बृहत् शिरः तस्याः एव।



*पितामहः* - वत्से किं भोजनापूर्वम् ईशस्मरणं किमपि न करोषि?

*वर्षिणी* - तस्य न कापि आवश्यकता तात, मम माता सम्यगेव पाकं करोति।

# पॉप्कॉर्न





मित्राणि! मिलत अद्य प्राचीनेन लोकप्रियखाद्येन तन्नाम पॉप्कॉर्नखाद्येन! पॉप्कॉर्न इत्यस्य प्राचीनतमकणिशानि मेक्सिकोदेशे 'बेट् केव्ह्' इत्यत्र गवेषकैः प्रकाशम् आनीतानि, येषां वयः न्यूनातिन्यून ५६०० वर्षमितं स्यात्। भारते चीनदेशे चापि बहूनि वर्षाणि यावत् पॉप्कॉर्न-खाद्यं जनप्रियखाद्यम् आसीत्।

पुरा धीवराः भृष्टान् पॉप्कॉर्न-कणान् सागरे जलदेवतायै समर्पयन्ति स्म। भृष्टाः कणाः वर्षोपलसदृशाः सन्ति अतः ते जलदेवतायै उत्तमानि उपायनानि सन्तीति तेषां मतिरासीत्।



भवन्तः पॉप्कॉर्न्निर्मितं कङ्कणं कण्ठहारं च परिधर्तुम् इच्छन्ति वा? स्टेक्-इण्डियन् जनाः तान् उत्तमान् अलङ्कारान् मन्यन्ते स्म। ते पॉप्कॉर्न्निर्मितानि शिरोभूषणादीन् अलङ्करान् धरन्ति स्म।



१४९६ तमे वर्षे यदा ख्रिस्तोफरकोलम्बसः वेस्ट्-इंडिज्-द्वीपम् अगच्छत्, तदा तत्रस्थाः जनाः तस्य नौवाहेभ्यः पॉप्कॉर्नभूषणानि विक्रेतुं प्रायतन्त।





१६२१ तमे वर्षे प्लेमाऊथ इत्यत्र वम्पनोग्-इण्डियन्-जनानां तत्रागतानाम् आङ्ग्लाधिनिवेशिजनानां च प्रथमं स्नेहभोजनम् अभवत्। तदानीं भोजनार्थं इण्डियन्-जनाः मृगचर्मनिर्मितायां गोण्यां पॉप्कॉर्नखाद्यम् सम्पूर्य आनीतवन्तः इति श्रूयते।



**कृच्छ्रं पॉप्कॉर्न-खाद्यं च!**

अमेरिकादेशे आर्थिकमन्दतायाः काले धनाभावात् जनाः पॉप्कॉर्नखाद्यमेव क्रेतुं शक्नुवन्ति स्म। अस्मिन् काले यदा अन्यवस्तूनां व्यापारः लयं गतः तदैव पॉप्कॉर्न-व्यापारः वृद्धिं गतः। तृतीये विश्वयुद्धे सैन्यस्य कृते शर्करा प्रेष्यते स्म। तेन मिष्टान्नानि निर्मातुं पर्याप्ता शर्करा नोपलभ्यते स्म। अस्यां परिस्थितौ जनाः सामान्यमात्रायाः त्रिगुणितं पॉप्कॉर्न-खाद्यं खादन्ति स्म।




पेरुदेशीयाः विवाहे मङ्गलाक्षतारूपेण पप्कन्र्-कणान् वर्षित्वा 'Vivan los novios' इति गर्जन्ति स्म। तन्नाम 'चिरं जीवतां नवदम्पती' इति।



पर्सी स्पेन्सर् नाम शास्त्रज्ञः मग्नेट्रोन्स् (magnetrons), माय्क्रोव्हेव् (microwaves) चैतत् विषयद्वयम् अधिकृत्य विशेषोपयोगिगवेषणार्थं कार्यं करोति स्म। तेन माय्क्रोव्हेव्-तन्त्रज्ञानस्य साहाय्येन कृतं पप्कर्न् इत्यस्य गवेषणं बहु उपयोगि आसीत्। तस्य प्रयत्नानां फलरूपेण अग्रे माय्क्रो-उखा निर्मिता।



पप्कर्न् नाम न तु केवलं उत्तमं खाद्यम् अपि तु ख्रिसमस्पर्वणि अलङ्करणार्थं, शिल्पानाम्, अन्यकलाकृतीनां कृते सुशोभनार्थमपि तत् प्रयोक्तुं शक्यते। यथा तैः पप्कन्र्-माला, पप्कन्-कन्दुकं वा निर्मातुं शक्नुवन्ति भवन्तः।



अनपेक्षिता समेघस्वना महती वर्षा पप्कर्न् वर्षा (Popcorn storm) इत्यनेन शब्देन अभिधीयते आङ्गभाषायाम्। तथा च अत्यधिककार्यमग्नः भवान् स्वकार्यव्यस्ततां भ्राष्ट्रे भृज्यमानानां पप्कन्र्-कणानां चञ्चलतां गतिं च मनसि निधाय 'I'm busy as popcorn on a skillet' इत्येनेन वाक्येन अभिव्यञ्जयितुं शक्नोति!



# वर्ध्यताम् शब्दसम्पत्तिः

कति भारतीयाः भाषाः ज्ञायन्ते भवद्भिः ? अधुना चन्दमामा-साहाय्येन भारतीयाः भाषाः पठित्वा कामं भारतभ्रमणं क्रियताम् । अधस्तनं शब्दपटं दृष्ट्वा स्वभाषायां वाक्यं पठन्तु। अनन्तरं निर्देशानुसारं तदेव वाक्यम् अन्यासु भाषासु कथं वक्तव्यम् इति अवगच्छन्तु ।





| English | I am going on a holiday. | When are you going? |
|---|---|---|
| Sanskrit | अहं विरामार्थं गच्छामि। | त्वं कदा गच्छसि? |
| Telugu | నేను సెలవుపై వెళుతున్నాను.<br>ननु सेलवुपै येलुथुन्ननु. | మీరు ఎప్పుడు వెళుతున్నారు?<br>मीरु येप्पुदु येलुथुन्नरु? |
| Tamil | நான் விடுமுறையில் செல்கிறேன்.<br>नान विदुमुरैयिल सेल्गिरएन. | எப்போது செல்கிறாய்?<br>एप्पोदु सेल्गिराइ? |
| Bengali | আমি ছুটিতে যাচ্ছি।<br>आमि छुटिते जाच्छि. | আপনি কবে যাচ্ছেন?<br>आप्नि कोबेय जाच्छेन? |
| Marathi | मी सुट्टीवर जात आहे.<br>मी सुट्टीवर जात आहे. | तू कधी जात आहेस?<br>तु कधी जात आहेस? |
| Kannada | ನಾನು ರಜೆಯಲ್ಲಿ ಹೋಗುತ್ತಿದ್ದೇನೆ.<br>ननु रजेयल्लि होगुत्तिद्देने. | ನೀವು ಯಾವಾಗ ಹೋಗುತ್ತಿದ್ದೀರಿ?<br>नीवु यावाग होगुत्तिद्दीरि? |
| Oriya | ମୁଁ ଛୁଟିରେ ଯାଉଛି।<br>मुन छुटिरे जाउच्छि. | ତୁମେ କେବେ ଯାଉଛ?<br>तुमे केबे जाउच्छि? |
| Gujarati | હું રજા પર જાઉં છું.<br>हुं रजा पर जाउं छुं. | તમે ક્યારે જઈ રહ્યા છો?<br>तमे क्यारे जई रह्या छो? |
| Assamese | মই বন্ধ কটাবলৈ যাম।<br>मोइ बन्ध कोताब्लोइ जाम. | তুমি কেতিয়া যাবা?<br>तुमि केतिय जाबा? |
| Malayalam | ഞാൻ അവധിക്കാലം ആഘോഷിക്കാൻ പോകുന്നു.<br>न्जन अवधिकलन अघोशिकन पोकुन्नु. | എപ്പോൾ പോകുന്നു?<br>एप्पोल पोकुन्नु? |
| Santali | ᱤᱧ ᱪᱷᱩᱴᱤ ᱨᱤᱧ ᱥᱮᱱᱚᱜ ᱠᱟᱱᱟ।<br>इन्ज छुति रिन्ज सेनोग काना. | ᱚᱠᱟ ᱛᱮᱢ ᱥᱮᱱᱚᱜ ᱠᱟᱱᱟ?<br>ऑका तेम सेनोग काना? |
| Hindi | मैं छुट्टी पर जा रहा हूँ।<br>मै सुट्टी पर जा रहा हू। | तुम कब जा रहे हो?<br>तुम कब जा रहे हो? |





| English | End of this month. | With who are you going? |
|---|---|---|
| Sanskrit | अस्मिन् मासान्ते। | केन सह गमिष्यसि त्वम्? |
| Telugu | ఈ నెల చివరలో.<br>ई नेल छिवरलो. | ఎవరితో వెళుతున్నారు?<br>येवरितो वेलुतुन्नरु? |
| Tamil | இந்த மாதக் கடைசியில்.<br>इन्धा माध कदैसियिल. | யாருடன் செல்கிறாய்?<br>यारुदन सेल्गिराइ? |
| Bengali | এই মাসের শেষে।<br>एइ मासेर सेशे. | আপনি কার সঙ্গে যাচ্ছেন?<br>आप्नि क्कार सोंगेय जाछ्छेन? |
| Marathi | या महिन्याच्या अखेर<br>या महिन्याच्या अखेर. | तू कोणासोबत जात आहेस?<br>तु कोणासोबत जात आहेस? |
| Kannada | ಈ ತಿಂಗಳ ಕೊನೆಯಲ್ಲಿ.<br>ई तिन्गल कोणेयल्लि. | ನೀವು ಯಾರೊಂದಿಗೆ ಹೋಗುತ್ತಿದ್ದೀರಿ?<br>नीवु यारोन्दिगे होगुत्तिद्दीरि? |
| Oriya | ଏଇ ମାସ ଶେଷରେ।<br>एइ माश शेशरे. | ତୁମେ କାହା ସହିତ ଯାଉଛ?<br>तुमे काहा शहित जाउच्छि? |
| Gujarati | આ મહિનાનાં અંતે.<br>आ महिनाना अन्ते. | તમે કોની સાથે જાઓ છો?<br>तमे कोणी साथे जाउ छो? |
| Assamese | এই মাহৰ শেষত।<br>एइ माहोर क्षेखोत. | তুমি কাৰ লগত যাবা?<br>तुमि कार लोगोत जाबा? |
| Malayalam | ഈ മാസം അവസാനം.<br>एई मसम अवसनम. | ആരോടൊപ്പം പോകുന്നു?<br>आरोदोप्पम? |
| Santali | ᱱᱚᱣᱟ ᱪᱟᱸᱫᱚ ᱢᱩᱪᱟᱹᱫ?<br>नोव छन्द मुछद्? | ᱚᱠᱚᱭ ᱥᱟᱶᱛᱮ ᱟᱢ ᱥᱮᱱᱚᱜ ᱠᱟᱱᱟ?<br>ओकोय सौन एम सेनोग कना? |
| Hindi | इस माह के अंत में।<br>इस माह के अन्त मे। | तुम किसके साथ जा रहे हो?<br>तुम किसके साथ जा रहे हो? |

## जीवनमेव यात्रामयम्



वयं प्रवासं कुर्मः तदा तदा। किन्तु आजीवनं तु प्रवासः न भवति अस्मासु कस्यापि। किन्तु हिमालयपरिसरे हिमाच्छादिते प्रदेशे वसन्तः 'गुज्जर'-कुलीयाः तु आजीवनं प्रवासं कुर्वन्ति। भारते विरलतया दृश्यमानासु जातिषु अन्यतमा एषा। ते प्रतिवर्षं पटगृहम्, अच्छादकादीनि वस्त्राणि, आहारवस्तूनि, अन्यानि गृहोपकरणानि च अश्वानाम् उपरि आरोप्य सहस्राधिककिलोमीटर् दूरं परिक्रमन्ति। नवम्बर्-मार्च्मासयोः मध्यकाले ते जम्मूप्रदेशे स्थितेषु रैसी-राजोरी-पूञ्छ्प्रभृतिषु प्रदेशेषु समूहरूपेण वसन्ति। यदा एप्रिल्मासः उपस्थितः भवति तदा हिमालयस्य उन्नते स्थाने स्थितान् शाद्वलान् प्रति गच्छन्ति ते। ग्रीष्मकाले तेषां विश्रान्तिस्थानम् एतत्। यदा सप्टम्बर्मासः सम्प्राप्यते तदा शाद्वलेभ्यः निर्गताः ते जम्मूस्थानि हेमन्तकालीनगृहाणि प्रति आगच्छन्ति।

## ग्रामं संरक्षति देवः

तमिळुनाडुराज्ये चेन्नैसमीपे 'मतिङ्कुलयम्' नामकः कश्चन ग्रामः अस्ति। नारिकेलवृक्षबहुले समुद्रतीरे अस्ति सः ग्रामः। तस्य ग्रामस्य जनाः देवालयस्थे देवे महतीं श्रद्धां वहन्ति। तत्रत्यः आराध्यदेवः अस्ति मुनियप्पस्वामी। सः स्वामी एव ग्रामस्थानि १३२ गृहाणि संरक्षति।

तत्रत्याः वदन्ति यत् अद्यावधि ग्रामे एकम् अपि चौर्यं न जातम् इति। तत्रत्यानां गृहाणां न द्वाराणि, न वा दृढाच्छादनानि। यदि द्वाराणि, दृढाच्छादनानि वा क्रियेरन् तर्हि देवः कुप्यति इति भावयन्ति तत्रत्याः। द्विशताधिकवर्षेभ्यः पूर्वं निर्मितस्य मन्दिरस्यापि न सन्ति द्वाराणि, न वा दृढानि आच्छादनानि।



प्रत्युत्पन्नमतिः

वीरबलः



# वृन्ताकं वीरबलः च



१. एकदा वीरबलेन सह भुञ्जानः बादशाहः वृन्ताककथितं खादन् अवदत्, ''वीरबल,मन्ये सर्वशाकेषु वृन्ताकमेव सर्वोत्तमम्। किं चिन्तयसि ?''



२. ''अथ किं! महाराज, सर्वशाकेषु रुचिकरं पौष्टिकं च शाकं तत् । शाकानां राजा इत्येव खलु तस्य उपाधिः स्यात्।''



३. ''कथमिव ?'' अपृच्छत् बादशाहः। '' महाराज! शाकस्य वृन्तं पश्यतु। किं मुकुटमिव न भासते ?''वीरबलः अवदत्।'' हा हा !साधूक्तं वीरबल!''



४. पुनः कदाचित् भोजनावसरे अकबरवीरबलौ अभुञ्जाताम्। वृन्ताककथितखादनसमये,बादशाहः क्रोधेन अवदत्,''पुनरेकवारं वृन्ताककथितम्!''



५. ''वीरबल, वृन्ताकं नाम निःसत्त्वं शाकम्। किं चिन्तयसि त्वम् ?'' अवदत् अक्बरः। ''सत्यं महाराज, अत्यन्तं रुचिहीनं तत्।'' प्रत्यवदत् वीरबलः।



६. तदा बादशाहः क्रुद्धः। ''वीरबल, स्वस्य पूर्वतनं मतमेव कथं विरुद्ध्यसे त्वम्? वृन्ताकं शाकानां राजा इत्यपि अकथयः त्वं पूर्वम्।''



७. ''अहं केवलं भवत्कथनमनुवर्तये महाराज! यदा भवान् तत् निन्दितवान्, मया अपि तथैव कृतम्।'' ''परन्तु किमर्थं?'' अपृच्छत् अकबरः।



८. ''यतः महाराज!भवन्तं प्रति मम निष्ठा न तु वृन्ताकं प्रति। वृन्ताकस्य प्रशंसया मम कः लाभः? परन्तु भवदनुकरणेन मम महती वृद्धिः''।



९. वीरबलस्य विचक्षणेन स्पष्टेन च उत्तरेण बादशाह प्रसन्नः। वीरबलस्य पृष्ठे हस्तचपेटं दत्त्वा सः अवदत् '' नूनं पारितोषिकार्हम् एतदुत्तरम्!'' इति।

## त्रिशतं दिनानि उत्सवः एव।

**श्री**रङ्गे विद्यमानं श्रीरङ्गनाथमन्दिरं कश्चन अपूर्वः मन्दिरसमुदायः वर्तते यत्र वर्षस्य ३०० दिनानि यः कोऽपि उत्सवः आचर्यते एव। अपरा अपूर्वता नाम भारतस्य मन्दिरेषु उन्नततमम् अस्य गोपुरम् (१३ अट्टात्मकं २३५ फूटमितं च)

मन्दिरसमुदाये अस्मिन् पञ्च प्रमुखाणि वैष्णवमन्दिराणि सन्ति। तिरूचिरापल्लितः १५ कि.मि. दूरे श्रीरङ्गद्वीपः वर्तते। मुख्यमन्दिरं विहाय मन्दिरपरिसरे गणेशस्य, विष्णोः, दुर्गायाः, रामस्य, लक्ष्मणस्य वटपत्रे शयानस्य कृष्णस्य, हनुमतः, धन्वन्तरेः अन्येषां च मन्दिराणि सन्ति। अतः एव विपुलाः उत्सवक्रियाः। डिसेंबरमासे सम्पद्यमानः 'वैकुण्ठ-एकादशी' इति उत्सवः सर्वेषु मुख्यभूतः वर्तते।

# चित्रमञ्जूषा

अस्मिन् मासे वाद्यानाम् चित्राणि आधारीकृत्य चित्रपुस्तिकानिर्माणं कुर्मः



संवादिनी



व्हायोलिन-वाद्यम्



मुरजः



नागस्वरः



कांस्यतालः



क्लॅरिनेट वाद्यम

